# शाब्दी त्रिपथगा

( बौद्धवैयाकरण-विशेषाङ्कः )

## संस्कृतव्याकरण-परम्परायां बौद्धवैयाकरणानां योगदानम्

अङ्कः - 2 जुलाई-जून 2017-18



व्याकरणविभागः

राष्ट्रियसंस्कृतसंस्थानम्

( भारतशासनमानवसंसाधनविकासमन्त्रालयाधीनः राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषद् द्वारा 'ए'-श्रेण्यां प्रत्यायितः समविश्वविद्यालयः )

श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः

पौडीगढवालः, उत्तराखण्डः - 249301

शाब्दी त्रिपथगा-2 ( बौद्धवैयाकरण-विशेषाङ्कः ) संस्कृतव्याकरण-परम्परायां बौद्धवैयाकरणानां योगदानम्



श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः

पौडीगढवालः, उत्तराखण्डः - 249301



धर्मकीर्तिः

मुखपृष्ठ चित्रम् चन्द्रगोमिनः

# शाब्दी त्रिपथगा

**( बौद्धवैयाकरण-विशेषाङ्कः )**

**संस्कृतव्याकरण-परम्परायां बौद्धवैयाकरणानां योगदानम्**

अङ्कः - 2 जुलाई-जून 2017-18

प्रधान-सम्पादकः

**के.बी. सुब्बरायुडुः**

सम्पादकौ

**बनमाली बिश्वालः**

**प्रफुल्लगडपालः**




राष्ट्रिय-संस्कृत-संस्थानम्
( सम-विश्वविद्यालयः )
श्रीरघुनाथ-कीर्ति-परिसरः
देवप्रयागः, पौडी-गढवालः
उत्तराखण्डः - 249301
**2018**

ISBN -

**शाब्दी त्रिपथगा**

(बौद्धवैयाकरण-विशेषाङ्कः)

**संस्कृतव्याकरण-परम्परायां बौद्धवैयाकरणानां योगदानम्**

**अङ्कः** - 2 **( जुलाई-जून 2017-18)**

**प्रकाशकः**

**राष्ट्रिय-संस्कृत-संस्थानम्**
(सम-विश्वविद्यालयः)
श्रीरघुनाथ-कीर्ति-परिसरः
देवप्रयागः, पौडी-गढवालः
उत्तराखण्डः - 249301
srkcampus@gmail.com..



**वार्षिक-सहयोगः**

- भारतीयानां कृते - रू. 150-00
- वैदेशिकानां कृते - रू. $ 35

(डाक-नामाभिलेखनयोः व्ययेन सहितः)

**मुद्रकः** -

डी.वी. प्रिण्टर्स
९७-यू.बी., जवाहर नगर,
दिल्ली - 110 007
मो. 98182 79798, 99902 79798

# *Śābdī Tripathagā*

**( A Special Issue on Buddhist Grammarians)**

## Contribution of Buddhist Grammarians to the Tradition of Sanskrit Grammar

**Issue - 2** **July - June 2017-18**

**General Editor**
K.B.Subbaraidu

**Edited by**
Banamali Biswal
Prafulla Gadpal




**Rashtriya Sanskrit Sansthan**
**(Deemed University)**
**Shri Raghunath Kirti Campus**
**Devaprayag, Pauri Garhwal**
**Uttarakhand - 249301**
**2018**

# नान्दीवाक्

श्रीरघुनाथकीर्त्याख्ये यूनि परिसरे शुभे।
व्याकरणविभागीया सङ्गोष्ठी द्विदिनात्मिका।१।

सा चान्ताराष्ट्रिया गोष्ठी विचारान् विदुषां नवान्।
अख्यापयच्च लोकेऽस्मिन् बौद्धव्याकरणाश्रितान्।२।

पक्षविपक्षसम्मिश्रान् निर्मथ्य युक्तिसङ्गतान्।
अस्थापयच्च सिद्धान्तान् नवनीत-समांश्च कान्।३।

सन्ति व्याकरणे शास्त्रे सुमहत्यः परम्पराः।
बौद्धपरम्परायां तु सङ्गोष्ठीयं व्यशिष्यत।४।

विदुषां समधीतीनां नवशोधैकचक्षुषाम्।
सङ्गोष्ठी चाद्वितीयेयमसिद्ध्यन्मार्गदर्शिका।५।

तानि पत्राणि संगृह्य विशेषाङ्को विधीयते।

विदुषामुपकाराय सेत्स्यतीयं दृढा मतिः।६।

व्याकरणे च बौद्धानां योगदानं महत्तमम्।

तत्तत्प्रकाशिने चायं विशेषाङ्को विशिष्यते।७।

स्वर्गादित्रिषु लोकेषु गङ्गा त्रिपथगामिनी।
शाब्दी त्रिपथगा काचिद् भाषात्रयसमन्विता।८।

पण्डितानामधीतीनां प्रत्यग्र-शोधचक्षुषाम्।
शाब्दी त्रिपथगा भवेत् त्रयाणां मार्गदर्शिका।९।

या विद्या सर्वविद्यासु चाद्या विद्या प्रकीर्तिता।
तां विद्यां सन्तनोत्वेषा शाब्दी त्रिपथगाऽनघा।१०।

**( बिश्वालस्य बनमालिनः )**

## Prologue

Śrīraghunāthakīrtyākhye yūni parisare śubhe/
Vyākaraṇavibhāgīyā saṅgoṣṭhī dvidinātmikā/1/
    Sā cāntarāṣṭriyā goṣṭhī vicārān viduṣām navān/
    Akhyāpayacca loke'smin Bauddhavyākaraṇāśritān/2/
Pakṣavipakṣasammiśrān nirmathya yuktisaṅgatān/
Asthāpayacca siddhāntān navanītasamāṃśca kān/3/
    Santi vyākaraṇe śāstre sumahatyaḥ paramparāḥ//
    Bauddha-paramparāyāṃ tu saṅgoṣṭhīyam vyaiśiṣyata/4/
Viduṣām samadhītīnām navaśodhaikacakṣuṣām
Saṅgoṣṭhī cādvitīyeyam asiddhyan mārgadarśikā/5/
    Tāni patrāṇi saṅgṛhya viśeṣāṅko vidhīyate/
    viduṣāmupakārāya setsyatīyam dṛdhā matiḥ/6/
vyākaraṇe ca Bauddhānām yogadānam mahattamam/
tattatprakāśane cāyaṃ viśeṣāṅko vidhīyate/7/
    Svargādi-triṣu lokeṣu Gaṅgā tripathagāminī/
    Śābdi Tripathagā kācid bhāṣātrayasamanvitā/8/
Paṇḍitānāmadhitīnām pratyagra-śodhacakṣuṣām/
Śābdi Tripathagā bhavet trayāṇām mārgadarśikā/9/
    Yā vidyā sarvavidyānām cādyā vidyā prakīrtitā/
    tām vidyām santanotveṣā Śābdi Tripathagā'naghā /10/

(by Prof. Banamali Biswal)
The Co-ordinator and Editor

# पुरोवाक्

श्रीरघुनाथकीर्तिपरिसरः द्वितीये एव वर्षे अत्रत्य-विविध-विभागीय-पत्रिकाणां प्रकाशनं कर्तुं निश्चिनोति इति परिसरस्य कृते कश्चन गौरव-प्रसङ्गः। तत्क्रमे व्याकरण-विभागीय-पत्रिकायाः (शाब्दी त्रिपथगायाः) द्वितीयाङ्कः 'बौद्धवैयाकरणविशेषाङ्क'-रूपेण (अन्ताराष्ट्रियसङ्गोष्ठी-विशेषाङ्करूपेण वा) प्रकाशितो भवतीति महतः प्रमोदस्य विषयः। 03-02-2018 तः 04-02-2018 दिनाङ्कं यावद् व्याकरण-विभागीया द्विदिवसीया अन्ताराष्ट्रिया सङ्गोष्ठी सम्पन्ना आसीत्। तस्याः सङ्गोष्ठ्याः केन्द्रीयो विषय आसीत्- 'संस्कृतव्याकरणपरम्परायां बौद्धवैयाकरणानां योगदानम्' इति। तत्र समेषु पञ्चाधिकसत्रेषु आहत्य त्रिंशदधिकानि शोधपत्राणि प्रस्तुतान्यासन्। तानि पत्राणि अत्र विशिष्य समायोजितानि सन्ति। एवमेव व्याकरणविभागीया विशिष्टव्याख्यानमाला अपि परिसरे 03-02-2018 इत्यस्मिन् दिनाङ्के समायोजिता। तत्र प्रो. किशोरचन्द्रपाढी 'पाणिनीयव्याकरणं प्रति बौद्धाचार्याणां योगदानम्' इति विषयमधिकृत्य व्याख्यानं प्राददात्। तच्च व्याख्यानमत्र सबहुमानं प्रकाशितमस्ति। एतदतिरिच्याप्यत्र अन्यानि कानिचन पत्राणि प्रकाशितानि सन्ति। बौद्ध-संस्कृत-वैयाकरणानां व्याकरणपरम्परायां योगदानविषये अस्याः पत्रिकायाः सामग्रीजातमुपकारकं सेत्स्यतीत्यत्र नास्ति सन्देहावसरः।

परिसरस्य प्रमुख-शैक्षणिक-गतिविधिषु शोध-सङ्गोष्ठी-प्रकाशनान्यपि उल्लेखमर्हन्ति। व्याकरणविभागाध्यक्षस्य प्रो. बनमाली बिश्वालस्य मार्गदर्शनेन परिसरस्यास्य व्याकरणविभागः सक्रियः सन्न केवलं प्राक्शास्त्रि-शास्त्रि-आचार्य-विद्यावारिधि-(पीएच.डी.)-उपाध्यर्थं पारम्परिकशिक्षणे, किन्तु आधुनिक-शोध-सङ्गोष्ठी-प्रकाशनादि-कर्मस्वपि स्वकीयं योगदानं सुतरां सुनिश्चयतीत्यस्य विभागस्य अध्यक्षं प्रो. बनमालीबिश्वालं संयुक्तसम्पादकं डा. प्रफुल्लगडपालम् अन्यान् विभागीयप्राध्यापकांश्च साधुवादैः सभाजयामि। एवमस्याः पत्रिकायाः परवर्तिनः अङ्काः अपि एतादृशैः समृद्धैः शोधपरकसामग्रीभिः विलसिष्यन्तीति कामयमानो विरमामि विस्तरादिति शम्।

**प्रो.के.बी. सुब्बरायुडुः**

परिसर-प्राचार्यः

# Editorial

The second volume of *Śābdī Tripathagā* is again a Special issue dedicated to Buddhist Grammarians as it mostly contains papers presented in the International seminar of *Vyākarṇna* Department of Shri Raghunātha Kīrti Campus held between 2nd and 3rd February, 2018. The main topic of the seminar was संस्कृतव्याकरण-परम्परायां बौद्धवैयाकरणानां योगदानम् (The Contribution of Buddhist Grammarians to the tradition of Sanskrit Grammar).

Sanskrit grammatical tradition (*Saṃskṛta-Vyākaraṇa-paramparā*) is not only very old but highly commendable also. Hence, it is rightly treated as one of the six disciplines of Veda (vedāṅgas). Though the grammar of Pāṇini (5th century BC) is not the earliest thinking on grammar, but undoubtedly it became widely influential and the later Sanskrit grammarians like Kātyāyana (*the author of Vārtikas*) and Patañjali (*the author of Bhāṣya*) added to the work by considering various issues such as the nature of the word-meaning, processes of linguistic acquisition etc. The tradition proves that Pāṇini was neither the first grammarian nor he was the last. Thus, the complete grammatical tradition can be classified into three groups, namely, Pre-pāṇinian, pāṇinian and Post-pāṇinian schools.Yudhisthira Mimamsaka in his History of Sanskrit grammar gives a list of 59 pre-pāṇinian grammarians as remebered in *Prātiśākhya*-works. Though, Pāṇini forgot many of them in his Aṣṭādhyāyī, still some are very famous in the tradition of Sanskrit grammar. Those forgotten and neglected pre-Pāṇinian grammarians are : Maheśvara, Bṛhaspati, Indra, Vāyu, Bharadvāja, Bhāguri, Pauṣkarasādi, Cārāyaṇa, Kāśakṛtsna, Vaiyāghrapādya, Mādhyandini, Rauḍhi, Śaunaki, Gautama and Vyāḍi etc. However, Pāṇini mentions ten ācāryas in his Aṣṭādhyāyī, namely, Āpiśali, Kāśyapa, Gārgya, Gālava, Cākravarman, Bhāradvāja, Śākaṭāyana, Śākalya, Senaka and Sphoṭāyana. His grammar which is mostly referred to in the teaching of Sanskrit today, consists of several linguistic aspects

such as phonology (śivasūtras), morphology (Aṣṭādhyāyī and Dhātupāṭha of which the later lists classes of verbal roots), Gaṇapāṭha (lists classes of primitive nominal stems) etc.

Similarly, amongst the post-Pāṇinian grammarians, the names of Śarvavarman (the author of KātantraVyākaraṇa, Cadragomī (the author of Cāndra-vyākaraṇa), Kṣapaṇaka, Devanandin (the author of Jainendra-Vyākaraṇa), Vāmana, Pālyakīrti, Bhojadeva, śivasvāmi, Buddhisāgara, Bhadreśvarasūri, Vardhamāna, Mahendra, Malayagiri, Kramadīśvara, Anubhūtisvarūpācārya, Bopadeva and Padmanābha etc. are accepted with high respect.

Of these Ācāryas who enrich the tradition of Sanskrit grammar through their valuable contributions, though maximum are the followers of Hinduism, still a few are followers of Jainism like Hemacandra and Kīrtichandrasūri etc. whereas many others are followers of Buddhism such as Indragomī, Candragomī etc. The Buddhist ācāryas have not only composed good poetry but they also have contributed to various Indian śāstras in general and that of Vyākaraṇa in particular. Among the Buddhist grammarians, those who deserve mention here are : Indragomī, Cadragomī, Puruṣottamadeva, Amarasiṃha, Dharmakīrti, Jayāditya-Vāmana, Jinendrabuddhi, Bhartṛhari, Kramadīśvara, Anubhūtisvarūpācārya and Dharmadāsa etc.

These Buddhist grammarians have nourished the tradition of Sanskrit grammar in different time-frame. Though maximum of these Buddhist grammarians are post-Pāṇinian still some of them can be accepted as pre-Pāṇinian also. Of these Buddhist grammarians, in one hand some have composed new independent grammars like Aindra, Cāndra, Sāmantabhadra, Viśrāntavidyādhara, Bālāvabodha, Aṣṭadhātu, Manjuśrīśabdalakṣaṇa etc. where as some others have preferred to write commentaries on the existing famous grammars. The commentaries written by Buddhist grammarians include : Kāśikā, Rūpāvatāra, Nyāsa, Bhāgavṛtti, Durghaṭa-Vṛtti, Cāndravṛtti, Vākyapadīya-prakīrṇavyākhyā, Tantrapradīpa, Cāndrapañjikā, Anunyāsa, Kātantravyākaraṇaṭikā, Liṅgānuśāsana-bhāṣāvṛtti, Pātrikaraṇalīnārthadīpa, Cāndrapaddhati, Bodhinyāsa, Subantaratnākara, Bhāṣāvṛttivivaraṇa-pañjikā, Subodhini-gaṇatippaṇikā, Ākhyātavicāra and Upayogakrama etc.

Similarly, some Buddhist scholars have translated a few original Sanskrit grammar and their commentaries into Tibbatian language. The Tibbatian translators are : Ācārya Śāntiprabha, Locavabhāradvāja, Sthiramati, Kīrtidhvaja, Bu-tonaratnasiddha, Bodhiśikhara, Manjughoṣakhadga, Karuṇaśrībhadra, Ratnadharmapālabhadra, Lāmātārānatha, Vāgīśvaralaxminirābhoga, Dharmabhadra, Gaganabhadra (Vyomabhadra, Suryadhvaja, Dharmakīrtiśribhadra, Matidhvaja and Vāgīśvararatnamangala etc. However, in this assignment of Tibbatian translation some Indian scholars have also assisted substantially. Prominent of Indian translators are : Śrīmaṇika, Kīrtichandra, Manjughoṣakhadga, Kṛṣṇbhatta, Gokulanātha Mishra, Bālabhadra, Jetakarṇa and Kṛṣṇodaya etc. In addition to that, some Buddhist ācāryas have written a number of Vyākaraṇa in Pāli also. Some of the important Pāli-Vyākaraṇas are : KaccāyanaVyākaraṇa, MoggalāyanaVyākaraṇa, Bodhisatta-Vyākaraṇa, Savvaguṇākara-Vyākarana, Saddaniti-Vyākaraṇa and so on.

Precisely speaking, Buddhist grammarians have substantially contributed to the tradition of Sanskrit grammar. To keep record of their contributions, the Vyākaraṇa Department of Shri Raghhunatha-Kirti-Campus, Rashtriya Sanskrit Sansthan, Deva Prayag, Uttarakhand has organized an International Seminar on "The contribution of Buddhist Grammarians to the Tradition of Sanskrit Grammar" (*Saṃskṛta-vyākaraṇa-Paramparāyām Bauddha-vaiyākaraṇānām Yogadānam*) from 02.02.2018 to 03.02.2018. We are happy that there were some fruitful discussions on the focal theme and sub-themes of the seminar during those two days. No doubt, some new dimensions have come out through this important event.

Many experts on this subject, like Prof. Kishore Chandra Padhi, Dr. Shailesh Tiwari, Dr. Prafull Gadpal, Dr. Ramchandra etc. have participated in this seminar under the co-ordinatorship of Prof. Banamali Biswal. Some of them have chaired a few sessions and participated in the panel discussions while many of them have presented papers.Those papers are compiled and edited here along with some other papers related to this topic to make it a special issue of *Śābditripathagā*.

Hope this special volume, the part of which is in the form of the second proceedings of the International seminar of the Vyākaraṇa Department, will be appreciated by the learned scholars of Sanskrit Studies in general and that of *śabdavidyā* in particular.

**Prof. Banamali Biswal**
Head of the Department (Vyākaraṇa)

# विषयसूची

# 1

# बौद्धव्याकरणपरम्परा – एकं सर्वेक्षणम्

– प्रो. बनमालीबिश्वाल:

संस्कृते व्याकरणशास्त्रपरम्परा अतीव प्राचीना महत्त्वपूर्णा च वर्तते। अस्यां परम्परायाम् पाणिनीयतन्त्रस्य अत्यधिकं महत्त्वं वर्तते। पाणिनीयतन्त्रे पुन: वार्तिककारस्य कात्यायनस्य तथा महाभाष्यकारस्य पतजले: च स्थानं गौरवास्पदम्। साक्षान्मुनिस्वरूपाणाम् एतेषां त्रयाणामाचार्याणां 'त्रिमुनी'ति संज्ञा विश्वप्रसिद्धा। इतिहास: प्रमाणयति यत् पाणिनि: प्रथमो वैयाकरणो नासीत् नापि स: अन्तिम:। अत: संस्कृत-व्याकरणशास्त्र-परम्परा स्थूलरूपेण त्रिधा विभक्तुं शक्यते–१. पाणिनिपूर्व-व्याकरण-परम्परा, २. पाणिनीय-व्याकरण-परम्परा तथा ३. पाणिन्युत्तर-व्याकरण-परम्परा चेति।

युधिष्ठिरमीमांसकेन पाणिनिपूर्व-व्याकरण-परम्परायां प्रातिशाख्यादिग्रन्थेषु स्मृतानाम् एकोनषष्टि-सङ्ख्याकानाम् आचार्याणां सप्रमाणा सूचि: प्रस्तुताऽस्ति, येषु कतिपये आचार्या: पाणिनिना स्मृता:, किन्तु केचन सर्वथा विस्मृता: उपेक्षिताश्च सन्ति। पाणिनिना अनुल्लिखिता: किन्तु तत्पूर्ववर्तिन: आचार्या: महेश्वर-बृहस्पति-इन्द्र-वायु-भरद्वाज-भागुरि-पौष्करसादि-चारायण-काशकृत्स्न-वैयाघ्रपाद्य-माध्यन्दिनि-रौढि-शौनकि-गौतम-व्याडि-प्रभृतय: प्रसिद्ध्यन्ति। पाणिने: अष्टाध्याय्यां स्मृता: दश आचार्याश्च अधोलिखिता: सन्ति–आपिशलि-काश्यप- गार्ग्य-गालव-चाक्रवर्मण-भारद्वाज-शाकटायन-शाकल्य-सेनक-स्फोटायनाश्चेति। एवमेव पाणिन्युत्तरवर्तिषु आचार्येषु कातन्त्राव्याकरणकार: शर्ववर्मा, चान्द्रव्याकरणकार: चन्द्रगोमी, क्षपणक:, जैनेन्द्रव्याकरणकार: देवनन्दी, वामन:, पाल्यकीर्ति:, भोजदेव:, शिवस्वामी, बुद्धिसागर:, भद्रेश्वरसूरि:, वर्धमान:, महेन्द्र:, मलयगिरि:, कमदीश्वर: अनुभूतिस्वरूपाचार्य:, बोपदेव: तथा पद्मनाभश्चेत्यादीनाम् आचार्याणां नामानि सबहुमानं स्वीक्रीयन्ते।

संस्कृत-व्याकरणशास्त्र-परम्परां समेधयत्सु एषु आचार्येषु बहव: यद्यपि सनातनपन्थिनो भवन्ति, किन्तु केचन हेमचन्द्र-कीर्तिचन्द्रसूरिसदृशा: जैनाचार्या:, इन्द्रगोमी-चन्द्रगोमी-सदृशा: बौद्धाचार्या: अपि भवन्त्येव। बौद्धकविभि: संस्कृते न केवलं विशिष्टानि काव्यानि रचितानि, किन्तु तै: बौद्धमनीषिभि: विविधशास्त्रेष्वपि स्वकीयं योगदानं सुनिश्चितम्। अत एव शास्त्र-परम्परायां विशिष्य व्याकरणशास्त्र-परम्परायां च तेषां

भूमिका अनस्वीकार्या। तेषु बौद्धवैयाकरणेषु ऐन्द्रव्याकरणकार: इन्द्रगोमी, चान्द्रव्याकरणकर्ता चन्द्रगोमी, भाषावृत्तिकार: पुरुषोत्तमदेव: (देव:), अमरकोशप्रणेता अमरसिंह:, रूपावतारकार: धर्मकीर्ति:, काशिकाकारौ जयादित्य-वामनौ, न्यासकार: जिनेन्द्रबुद्धि:, वाक्यपदीयकार: भर्तृहरि:, कमदीश्वर:, अनुभूतिस्वरूपाचार्य: तथा धर्मदासादय: उल्लेख्या: सन्ति।

एते बौद्ध-वैयाकरणा: भिन्न-भिन्न-कालखण्डेषु स्व-स्व-कृतिततिभि: संस्कृत-व्याकरणशास्त्र-परम्परां पोषितवन्त:। एषु आचार्येषु अधिसंख्याका: यद्यपि पाणिन्युत्तरवर्तिन: सन्ति तथापि नैके पाणिनिपूर्ववर्तिन: अपि भवितुमर्हन्ति। एतैश्च बौद्धवैयाकरणै: यत्रैकत: ऐन्द्र-चान्द्र-सामन्तभद्र-विश्रान्तिविद्याधर-बालावबोध-अष्टधातु-मञ्जुश्रीशब्दलक्षणादीनि स्वतन्त्रव्याकरणानि प्रणीतानि, तत्रैव अपरत: नैके बौद्धाचार्या: प्रसिद्धव्याकरणानां व्याख्याग्रन्थानपि लिखितवन्त:। बौद्धव्याख्याकारै: प्रणीतासु व्याख्यासु काशिका-रूपावतार-न्यास-भागवृत्ति-दुर्घटवृत्ति-चान्द्रवृत्ति-वाक्यपदीय प्रकीर्णव्याख्या-तन्त्रप्रदीप-चान्द्रपञ्जिका-अनुन्यास-कातन्त्रव्याकरणटीका-लिङ्गानुशासन-भाषावृत्ति-पात्रीकरण-लीनार्थदीप-चान्द्रपद्धति-बोधिन्यास-सुबन्तरत्नाकर-भाषावृत्तिविवरणपञ्जिका-सुबोधिनीगणटिप्पणिका-आख्यातविचार-उपयोगक्रमसदृश्यो नैका: व्याख्या: प्रमुखा: सन्ति।

एवमेव कैश्चिद् बौद्धविद्वद्भि: संस्कृत-व्याकरण-ग्रन्थानां तथा तद्वृत्तीनामनुवादोऽपि तिब्बत्यादिभाषासु विहित:। तिब्बतदेशीय-अनुवादकेषु आचार्य: शान्तिप्रभ:, लोचावा भरद्वाज:, स्थिरमति:, कीर्तिध्वज:, वु-तोन रत्नसिद्ध:, बोधिशेखर:, मञ्जुघोषखड्ग:, करुणश्रीभद्र:, रत्नधर्मपालभद्र:, लामा तारानाथ:, वागीश्वर लक्ष्मी निराभोग:, धर्मभद्र:, गगनभद्र: (व्योमभद्र:), सूर्यध्वज:, धर्मकीर्तिश्रीभद्र:, मतिध्वज: वागीश्वररत्नमङ्गल-श्चेत्यादय: प्रसिद्ध्यन्ति। व्याकरणग्रन्थानां तिब्बतीयानुवादकार्येषु केचन भारतीया: पण्डिता: अपि सहायका अभवन्। तेषु प्रमुखा: सन्ति-श्रीमणिक:, कीर्तिचन्द्र:, मञ्जुघोषखड्ग:, कृष्णभट्ट:, गोकुलनाथमिश्र:, बलभद्र:, जैतकर्ण: कृष्णोदयश्चेति। अपरञ्च बौद्धाचार्या: पालिभाषायामपि नैकानि व्याकरणानि प्रणीतवन्त:। तत्र च कच्चायनव्याकरण-मोग्गलायनव्याकरण-बोधिसत्तव्याकरण-सब्बगुणाकरव्याकरण-सद्दनीतिव्याकरणादयो नैके प्रसिद्धा: व्याकरणसम्प्रदाया: विलसन्ति सुतराम्।

संक्षिप्य वदामश्चेद् बौद्धवैयाकरणानां संस्कृतव्याकरणपरम्परायां महद् योगदानं वर्तते। एतेषां बौद्धवैयाकरणानां योगदानमधोलिखितविवरणाद् अवगन्तुं शक्यते-

**संस्कृत-व्याकरणशास्त्र-परम्परायां बौद्धवैयाकरणा: तेषां मौलिक- ग्रन्थाश्च**

ऐन्द्रव्याकरणकार: इन्द्रगोमी, चान्द्रव्याकरणकर्ता चन्द्रगोमी, अमरकोशप्रणेता अमरसिंह:, वाक्यपदीयकारो भर्तृहरि:, सारस्वतव्याकरणकार: अनुभूतिस्वरूपाचार्य:, अष्टधातुव्याकरणकार:, सामन्तभद्र-व्याकरणकार: चन्द्रकीर्ति:, विश्रान्तिविद्याधर-व्याकरणकारो वामन:, बालावबोध-व्याकरणकार: आचार्यमहाकाश्यप:, मञ्जुश्रीशब्दलक्षणव्याकरणकार:,

संक्षिप्तसारकर्ता कमदीश्वरः एवम् अन्ये च बौद्धधर्मिणो आचार्याः अस्मिन् क्रमे समायान्ति।

**संस्कृत-व्याकरणशास्त्र-परम्परायां बौद्धव्याख्याकाराः तेषां व्याख्या-ग्रन्थाश्च**

कातन्त्रव्याकरणटीकाकारः आचार्यः कुमारलातः, चान्द्रवृत्तिकारः आचार्यः धर्मदासः, दुर्घटवृत्तिकारः आचार्यः दुर्गसिंहः, काशिकाकारौ जयादित्य-वामनौ, लिङ्गानुशासनकारः आचार्यः हर्षवर्धनः, भागवृत्तिकारः आचार्यः विमलमतिः, न्यासकारः जिनेन्द्रबुद्धिः, वाक्यपदीयप्रकीर्णव्याख्याकारः आचार्यः धर्मपालः, लिङ्गानुशासनकारः आचार्यः वामनः, कारकसम्बन्धोद्योतकारः आचार्यः रभसनन्दी, चान्द्रपञ्जिकाकारः आचार्यः पूर्णचन्द्रः, अनुन्यासकारः आचार्यः इन्दुमित्रः, तन्त्रप्रदीपकारः आचार्यः मैत्रेयरक्षितः, रूपावतारकारः आचार्यः धर्मकीर्तिः, भाषावृत्तिकारः पुरुषोत्तमदेवः (देवः), दुर्घटवृत्तेः प्रतिसंस्कर्ता आचार्यः सर्वरक्षितः, दुर्घटवृत्तिकारः आचार्यः शरणदेवः, पात्रीकरणकारः आचार्यः गुणाकारः, लीनार्थदीपकारः आचार्यः बुद्धनागः, चान्द्रपद्धतिकारः आचार्यः आनन्ददत्तः, चान्द्रपञ्जिकाकारः भिक्षुः रत्नमतिः, बोधिन्यासकारः आचार्यः धर्मघोषः, भाषावृत्तिविवरण-पञ्जिकाकारः आचार्यः विश्वसारः, सुबन्तरत्नाकरकारः आचार्यः सुभूतिचन्द्रः, सुबोधिनीगण-टिप्पणिकाव्याख्याकारः, आख्यातविचारव्याख्याकारः, उपयोगक्रमव्याख्याकारः, तथा अन्ये च बौद्धवैयाकरणाचार्याः संस्कृतव्याकरणशास्त्रपरम्परां समेधितवन्तः।

अनेके बौद्धविद्वांसः चीनीतिब्बत्यादिभाषासु एतेषां व्याकरणग्रन्थानाम् अनुवादम् अकुर्वन्। बौद्धविद्वद्भिः संस्कृत-व्याकरणग्रन्थानां तद्वृत्तीनाञ्च तिब्बत्यादिभाषासु येऽनुवादाः जाताः, तेषां विवरणमधोलिखितमस्ति-

### (क) तिब्बतदेशीया अनुवादकाः-

तिब्बतदेशीयेषु व्याकरणग्रन्थानुवादकेषु शान्तिप्रभः, लोचावा भरद्वाजः, स्थिरमतिः, कीर्तिध्वजः, वु-तोन रत्नसिद्धः, बोधिशेखरः, करुणश्रीभद्रः, रत्नधर्मपालभद्रः, लामा तारानाथः, वागीश्वर लक्ष्मी निराभोगः, धर्मभद्रः, गगनभद्रः (व्योमभद्रः), सूर्यध्वजश्चेत्यादयः प्रमुखास्सन्ति। तेषु धर्मकीर्ति श्रीभद्रः, मतिध्वजः, वागीश्वररत्नमङ्गलः प्रभृतयोऽन्ये च विद्वांसः ख्यातनामाः सन्ति।

### (ख) तिब्बतीयानुवादकार्येषु सहायकाः भारतीयाः पण्डिताः-

श्रीमणिकः (द्वादशशताब्दीयः), कीर्तिचन्द्रः (द्वादश-त्रयोदश-शताब्दीयः), मञ्जुघोषखड्गः, कृष्णभट्टः, गोकुलनाथमिश्रः, बलभद्रः, जैतकर्णः, कृष्णोदयः तथा अन्ये च भारतीयाः पण्डिताः विद्वांसः च तिब्बतीयानुवादकार्येषु प्रामुख्येन सहायका आसन्।

**बौद्धाचार्याणां पालिभाषाव्याकरणानि**

पालिव्याकरणपरम्परायां पञ्च व्याकरण-सम्प्रदायाः प्रसिद्ध्यन्ति। ते च सम्प्रदायाः सन्ति–१. कच्चान-व्याकरणसम्प्रदायः, २. बोधिसत्त-व्याकरणसम्प्रदायः, ३. सब्बगुणाकर-व्याकरणसम्प्रदायः, ४. मोग्गलान-व्याकरणसम्प्रदायः, सद्दनीति-व्याकरणसम्प्रदायश्चेति। साम्प्रतम् एतेषु व्याकरणसम्प्रदायेषु प्रामुख्येन कच्चायनव्याकरणं, मोग्गलायनव्याकरणं, बोधिसत्तव्याकरणं, सब्बगुणाकरव्याकरणं, सद्दनीतिव्याकरणम् एवम् अन्यानि च व्याकरणानि समुपलभ्यन्ते।

एवमुपर्युक्तविवरणे बौद्धव्याकरणपरम्परायां किञ्चित् संक्षिप्तम् ऐतिहासिकं च सर्वेक्षणं प्रस्तुतं, येषामवलोकनेन बौद्धव्याकरणानां वैशिष्ट्यञ्च रेखाङ्कितं भवति। बौद्धवैयाकरणानाम् ऐतिहासिकं सर्वेक्षणं प्रस्तोतुमयं कश्चन क्रमः अवश्यं स्वीकरणीयः। तत्र च आदौ बौद्धाचार्यप्रणीतानां मौलिकसंस्कृतव्याकरणानाम् ऐतिहासिकं सर्वेक्षणं, ततश्च बौद्धाचार्यव्याख्यातानां संस्कृतव्याकरणव्याख्याग्रन्थानाम् ऐतिहासिकं सर्वेक्षणम् एवमेव तस्मिन् क्रमे बौद्धाचार्यकृतानाम् अनूदित-संस्कृत-व्याकरण-ग्रन्थानाम् ऐतिहासिकं सर्वेक्षणं तथा अन्ते च बौद्धाचार्यप्रणीतानां पालिभाषा-व्याकरणानाम् ऐतिहासिकं सर्वेक्षणं कर्तव्यम्।

एतत् सर्वेक्षणेन क्रमशः मौलिक-बौद्ध-संस्कृत-व्याकरणानां वैशिष्ट्यं, बौद्ध-संस्कृत-व्याकरण-व्याख्याग्रन्थानां वैशिष्ट्यम्, अनूदित-बौद्ध-संस्कृत-व्याकरणग्रन्थानां वैशिष्ट्यं तथा बौद्धाचार्यप्रणीतानां पालिभाषा-व्याकरणानां च वैशिष्ट्यं लोकलोचनीभवितुमर्हति। प्रसङ्गेऽस्मिन् नवीनैः शोधकर्तृभिः शोधयोजनाः स्वीकरणीयाः। विगते वर्षद्वये राष्ट्रियसंस्कृत-संस्थानस्य श्रीरघुनाथकीर्तिपरिसरे व्याकरणविभागे साहित्यविभागे च काश्चन सङ्गोष्ठयः समायोजिताः। एताभिः सङ्गोष्ठीभिः भारतीयबौद्धशास्त्रपरम्परायाः विशिष्य बौद्धव्याकरण-साहित्यपरम्परायाः परिचयः सञ्जातः। एवमयमपि विशेषाङ्कः भारतीयबौद्धवाङ्मयसंरक्षणे संवर्धने स्वकीयं योगदानं सुनिश्चेष्यतीति शम्।

**सन्दर्भग्रन्थाः**

1. संस्कृत के बौद्ध वैयाकरण, डा. जानकीप्रसादद्विवेदी, केन्द्रीय-उच्च-तिब्बती-शिक्षा-संस्थान, सारनाथ, वाराणसी, १९८७
2. कातन्त्र तथा कच्चायन व्याकरण का समीक्षात्मक अध्ययन, डा. जानकीप्रसादद्विवेदी, डा. सुरेन्द्र कुमार, केन्द्रीय-उच्च-तिब्बती-शिक्षा-संस्थान, सारनाथ, वाराणसी, २००४
3. A Dictionary of Sanskrit Grammar - K.V. Abhyankar, Oriental Institute of Baroda, Baroda, 1961.

4. Technical Terms and Technique of Sanskrit Grammar - K.C.Chatterji, Sanskrit Book Depot., Kolkata.
5. व्याकरण शास्त्र का इतिहास-मीमांसक युधिष्ठिर, राजस्थान, भारतीय-विद्या प्रतिष्ठान
6. संस्कृत शास्त्रों का इतिहास-उपाध्याय बलदेव, वाराणसी, चौखम्बा विद्या भवन

विभागाध्यक्षः, व्याकरणविभागः
राष्ट्रिय-संस्कृत-संस्थानम्
श्रीरघुनाथकीर्तिपरिसरः
देवप्रयागः, पौडीगढवालः, उत्तराखण्डः

**आवासीय-सङ्केतः**
५७, वसन्त विहार, झूसी,
इलाहाबाद-२११०१९



# 2

# पाणिनीयव्याकरणं प्रति बौद्धाचार्याणां योगदानम्

–**किशोरचन्द्रपाढी**

**उपक्रमः–**

व्याकरणमेव भाषायाः स्वरूपसंघटनं विदधति। एवञ्च भाषाज्ञानप्राप्तये सर्वेषामपि अष्टानां शक्तिग्राहकाणां मध्ये मूर्धन्यं स्थानं भजते। व्याकरणानि बहुभिः महिर्षिभिः प्रणीतानि। तेषु इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः, शाकटायनः, पाणिनिः, अमरः, जैनेन्द्रः इत्येत अष्टौ शाब्दिकाः सुप्रथिता आसन्। न केवलमेतेषामेव व्याकरणानि श्रूयन्ते, अपि तु कौमारं, सारस्वतं, शाकल्यञ्चेति बहूनि व्याकरणानि प्राप्यन्ते।

साम्प्रतं प्राधान्येन पाणिनीयं व्याकरणमेव प्रचलितं दृश्यते। एतदेव व्याकरणं नितरां सुसमृद्धं, सुसम्पन्नं, सुललितं, सर्वाङ्गीणं, सर्वाख्रतं, व्यापकञ्च वर्तते। पाणिनीयपरम्परायाम् अष्टाध्यायी–वर्तिकपाठ–महाभाष्य–वाक्यपदीय–काशिकावृत्ति–परिभाषावृत्तिप्रक्रियाकौमुदी–सिद्धान्तकौमुदी–भूषणसार–मञ्जूषा–परिभाषेन्दुशेखरादयो ग्रन्थाः शोभमानाः सन्तः विराजन्ते।

पाणिनि–कात्यायन–पतञ्जलि–भर्तृहरि–जयादित्य–वामन–पुरुषोत्तमदेव–कैयट–शान्तरक्षित–धर्मकीर्ति–भटोजिदीक्षित–नागेशप्रभृतिषु वैयाकरणेषु केचन बौद्धा अपि आसन्। तेषामपि व्याकरणशास्त्रं प्रति महद् योगदानमस्ति। शोधप्रबन्धेऽस्मिन् बौद्धानां वैयाकरणानां योगदानविषये चर्चा करिष्यते।

**भर्तृहरिः**

इत्सङ्गस्य मतेन भर्तृहरिः बौद्धः आसीत्। ईस्वीय समये भर्तृहरेः मृत्युः अभवदिति तेनोक्तम्। तस्य मते भर्तृहरिः वारम्वारं बौद्धधर्मवैदिकधर्मयोर्मध्ये आवागमनं कृतवान्। सप्तवारं प्रव्रज्याग्रहणं कृतं तेन।

श्रीरामानुजस्य गुरोः यमुनाचार्यस्य मतेन भर्तृहरिः प्रच्छन्नबौद्ध आसीत्। वाचस्पतिमिश्रेणापि एवमेवोक्तम्। अभयङ्करलिमहोयेनापि भर्तृहरेः बौद्धत्वं स्वीकृतम्। वाक्यपदीयस्य कारिकायां चन्द्राचार्यस्य नामोल्लेखः कृतः। स चान्द्रव्याकरणस्य कर्ता बौद्धः चन्द्रगोमीति ऐतिहासिकाः स्वीकुर्वन्ति। पुण्यराजस्य मतानुसारेण केनचित् ब्रह्मराक्षसा

चन्द्राचार्यवसुरातगुरुप्रभृतये व्याकरणागमः प्रदत्तः। चन्द्राचार्यः वसुरातश्च सहकर्मिणौ सहधर्मिणौ स्तः। चन्द्राचार्यः बौद्धः। भर्तृहरिः वसुरातस्य साक्षात् शिष्य आसीत्।

### भर्तृहरेः व्याकरणशास्त्रं प्रति योगदानम्

वाक्यपदीयस्य रचयिता भर्तृहरिः। भर्तृहरिणा पतञ्जलेः प्रतिकृतिरूपं वाक्यपदीयं व्याकरणागमदर्शनरूपं विरचितम्। भर्तृहरेः प्राक् व्याकरणशास्त्रे स्वतन्त्ररूपेण कोऽपि दर्शनग्रन्थो नासीत्। व्याकरणस्य दर्शनात्मकतायाः प्रमुखः प्रतिष्ठापकः आचार्यः भर्तृहरिः। वाक्यपदीयसदृशोऽन्यः कश्चन व्याकरणस्य दर्शनप्रतिपादको ग्रन्थो व्याकरणशास्त्रे इदानीं नास्तीति निर्विवादम्। आगमकाण्डमित्याख्यातं वाक्यपदीयस्य ब्रह्मकाण्डमिति अपरपर्यायं प्रथमकाण्डं प्राधन्यतः महाभाष्यस्य पस्पशाह्निकमिव आधारीकरोति।

### तत्काण्डस्य पस्पशरूपता

व्याकरणदर्शनसिद्धान्ते शब्दब्रह्मवादनाम्ना सर्वतो विख्यातो वर्तते। तस्य प्रवर्तकोऽयं भर्तृहरिः। एवं च व्याकरणे विवर्तवादस्य प्रतिष्ठापको भर्तृहरिरेव। वाक्यपदीये नित्यः शब्दरूपः स्फोटः प्रतिपादितः। शब्दब्रह्मज्ञानेन कैवल्यप्राप्तिरिति वदता भर्तृहरिणा व्याकरणशास्त्रस्य दर्शनत्वं प्रतिष्ठापितम्। अतः स व्याकरणदर्शनस्य पथप्रदर्शक आसीत्।

स व्याकरणमहाभाष्यस्यापि प्रथमो व्याख्याकारः। महाभाष्यस्योपरि दीपिका नाम्नी टीका विरचिता।

### मैत्रेयरक्षितः

महाभाष्यस्य टीकाकारो मैत्रेयरक्षितो विशिष्टो बौद्ध आसीत्। धातुप्रदीपस्यापि कर्ता आसीत्। स बङ्गदेशीयः। न्यासस्योपरि तन्त्रप्रदीपा नाम्नी महती टीका तेन विरचिता। दुर्घटवृत्तिरपि प्रणीता। इत्थं पाणिनीयव्याकरणस्य व्याख्याने तस्य महत् योगदानं वर्तते।

### पुरुषोत्तमदेवः

अनेन भाषावृत्तिरिति वृत्तिग्रन्थो विरचितः। अष्टाध्याय्याः महाभाष्यस्य च व्याख्या कृता। उभयोः ग्रन्थयोः मङ्गलाचरणे बुद्धं नमस्कृतवान्। यथा महाभाष्ये-नमो बुधाय बुद्धाय इति। भाषावृत्तौ-नमो बुद्धाय भाषायां यथा त्रिमुनिलक्षणमिति। बौद्धदर्शने महावोधिविषये च आदरभावः प्रकटितः तेन। वैदिकसूत्राणामपि व्याख्या न कृता। अतः स बौद्ध आसीत्।

३.३.१७३ सूत्रे जिनः पातु वः, २.२.९ सूत्रे न दोषं प्रति बौद्धदर्शने, ३.३.११७ सूत्रे महाबोधिं गन्ता स्म, १.४.३२ सूत्रे प्रणम्य शास्त्रे सुगताय तायिने इत्यादिषु उदाहरणेषु तस्य बुद्धप्रीतिः प्रकटिता भवति।

**शरणदेवः**

अनेन दुर्घटवृत्तिः विरचिता। मङ्गलश्लोके बुद्धस्यापरनाम सर्वज्ञं नमस्कृतवान्। यथा–नत्वा शरणदेवेन सर्वज्ञं ज्ञानहेतवे इति। बौद्धग्रन्थस्य अनेकेषां प्रयोगाणां साधुत्वप्रतिपादनाय प्रयासः कृतः। अतः स बौद्धमतावलम्वीति प्रतीयते।

**जयादित्यवामनौ**

काशिकावृत्तिः पञ्चमाध्यायपर्यन्तं जयादित्येन ग्रथिता। अवशिष्टाः अन्तिमाः त्रयोऽध्यायाः वामनेन विरचिता इति ऐतिहासिकानां मतम्। पाणिनीयाष्टकमवलम्ब्य ग्रथितेषु वृत्तिग्रन्थेषु काशिकावृत्तिः सर्वातिशायिनी। अस्याः वृत्तेः प्रौढा प्रतिपादनशैली प्रौढानामपि चेतासिं चमत्करोति। काशिकावृत्तौ सर्वेषां पाणिनिसूत्रणां व्याख्यानं प्राप्यते। अस्यां वृत्तौ प्रतिसूत्रमनुवृत्ति–वृत्युदाहरणप्रत्युदाहरणानि शङ्कासमाधानपुरःसराणि समुपलभ्यन्ते। बहुत्र भाष्ये अनुक्तानामपि विषयाणां मनोहारि प्रतिपादनं कृतम्। इयमेव पूर्णा वृत्तिः। अन्या वृत्तयः प्रत्यक्षरूपेण इममेव अनुजीवन्ति।

वामनजयादित्यौ जैनौ इत्यनुमीयते इति वालशास्त्रि–सम्पादित–काशिकावृत्तेः भूमिकायामुपन्यासः कृतः। अपरे तु तौ बौद्धौ इति प्रतिपादयन्ति। एतदर्थं त्रीणि कारणानि प्रदतानि।

क. अन्येषु आस्तिकग्रन्थेषु वयं सर्वत्र मङ्गलाचरणं पश्यामः। परन्तु अमरकोश–ग्रन्थवत् काशिकावृत्तिग्रन्थप्रारम्भे मङ्गलाचरणं न दृश्यते।

ख. काशिकाकृद्भ्यामष्टाध्याय्याः सूत्रपाठे वार्तिकानां प्रक्षेपः कृतः। एतादृशं प्रक्षेपमास्तिकधर्मानुयायिनो न कर्तुं पारयन्ति।

ग. काशिकायां सम्मानोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनवव्ययेषु नित्यः इति सूत्रस्य वृत्तौ चार्वी बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान्नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति। नयते चार्वी लोकायते इति पाठस्योल्लेखो दृश्यते। अनेनानुमीयते यत् तौ बौद्धौ इति।

प्रो. हर्षनाथमिश्रेण काशिकाकारयोः बौद्धत्वं प्रतिपादितम्। तदर्थं केचन हेतवः प्रदत्ताः। यथा–

क. काशिकाकारेण सूत्रे लोकायतः बुद्धः इति उल्लेखः कृतः।

ख. निर्वाणेऽवाते इति सूत्रे निर्वाणो भिक्षुः इत्युक्वा भिक्षुशब्दस्योल्लेखः कृतः।

ग. चन्द्रगोमिना उणादिः सूत्रे वरणानद्याः प्रयोगः कृतः। तस्यानुकरणं त्वा वरणानद्याः उल्लेखो विहितः काशिकाकारेण। वरणानद्याः कूले सारनाथोऽवस्थितः।

घ. अथ शब्दानुशासनम् इति पाणिनीयसूत्रमिति काशिकाकारेण प्रतिपादितम्। बौद्धसम्प्रदायेऽपि एतत् स्वीकृतम्। इदं सूत्रं पाणिनीयमिति स्वामी दयानन्दो व्रबीति।

ङ. काशिकायाः उपरि चान्द्रव्याकरणस्य प्रभावो दरीदृश्यते। भाष्येऽनुक्तानामपि योगविभागानां चान्द्रप्रभावेण योगविभागः कृतः।

अनेनानुमीयते यत् काशिकाकारौ बौद्धौ इति मिश्रमहोदयानां मतम्।

According to S.K. Belvalkar's systems of Sanskrit Grammar (p.36) both Jayāditya and Vaman were Baudha because neither of them opens his work with any mangal. Both exhibit an unorthodox tendency to introduce change in to the workings of sūtras and Jayāditya at any rate refers in 1.1.36 to Lokayata. The resons stand to show that the author or authors were Baudhas.

### ६. जिनेन्द्रबुद्धिः

न्यासकारः बौद्धमतस्य प्रामाणिकाचार्यः आसीत्। स बोधिसत्त्वदेशीयः। वस्तुतः बोधिसत्त्वदेशीयत्वेन पदेन अर्थः स्पष्टतया नावगम्यते। परन्तु बोधिसत्त्वदेशस्य आचार्यत्वात् स बौद्धः आसीदिति श्रीशचन्द्रचक्रवर्तिमहोदयेन प्रतिपादितम्। जिनेन्द्रबुद्धिः वेदबाह्य इति भट्टोजिदीक्षितेन प्रौढमनोरमायां शब्दकौस्तुभे च लिखितमस्ति।

स काशिकावृत्तेः प्रथमो व्याख्याकारः। वैयाकरणसम्प्रदाये एतादृशो नास्ति कश्चन ग्रन्थो यत्र विषयप्रतिपादनं न्यासापेक्षया अधिकं स्पष्टं भवति। कठिनतराणां पंक्तीनां व्याख्या सरलया सुबोध्या च भाषया कृताऽस्ति। सर्वदा महाभाष्यकारस्य भाषाशैलीं विषयप्रतिपादनशैलीञ्चानुकरोति न्यासकारः। रूपासिद्धिदृष्ट्या न्यासस्य वैशिष्ट्यं वर्तते। वृत्तौ प्रदत्तानां सर्वेषामुदाहरणानां ससूत्रं साधनप्रक्रिया प्रदत्ता तेन।

### धर्मकीर्तिः

रूपावतारस्य रचयिता धर्मकीर्तिः बौद्धविद्वान् आसीत्। स प्रथमः प्रक्रियाकारः। प्रक्रियाक्रमस्योद्भावने तस्य महद् योगदानं वर्तते।

### उपसंहारः

चन्द्रगोमिप्रभृतयोऽपि बहवो बौद्धाः सन्ति येषां व्याकरणशास्त्रं प्रति योगदानमतुलनीयम्। भर्तृहरिकाशिकाकारादीनां बौद्धत्वविषये मतभेदो वर्तते। यद्यपि एभिः कुत्रचित् वेदस्तुतिः कृता, तथापि परिस्थितिवशात् धर्मपरिवर्तनं कर्तुं शक्यते। यतोहि तस्मिन् समये बौद्धधर्मस्य बहुलः प्रचारः प्रसारोऽपि आसीत्। येन जनाः आकृष्टाः सन्तः तद्धर्मेण दीक्षितवन्तः।

व्याकरणाध्यक्षचरः
जगन्नाथसंस्कृतविश्वविद्यालयः, पुरी (ओडिशा)



# 3

# बौद्धवैयाकरणौ काशिकाकारौ जयादित्यवामनौ

**- दीपचन्द्र चौरसिया**

जयादित्यवामनविरचिता सम्मिलिता वृत्तिः काशिकानाम्ना प्रसिद्धाऽस्ति। साम्प्रतं समुपलभ्यमानपाणिनीय-व्याकरणग्रन्थेषु महाभाष्यवाक्यपदीयानन्तरमियं काशिकावृत्तिरेव सर्वप्राचीना महत्त्वपूर्णा चाऽस्ति। अत्र बहूनां सूत्राणां वृत्तयः, उदाहरणानि च पूर्ववृत्तिभ्यः संगृहीतानि सन्ति। अतः पाणिनीयव्याकरणे काशिकायाः महन्महत्त्वं वरीवर्ति। काशयति प्रकाशयति सूत्रार्थमिति व्युत्पत्त्या निष्पन्नः काशिकाशब्दः। बालशास्त्रिसम्पादितायां काशिकायामाद्यानां चतुर्णामध्यायानामन्ते जयादित्यस्य, शेषाणां च चतुर्णामध्यायानामन्ते वामनस्य च नामाङ्कितमस्ति। हरिदीक्षितेन प्रौढमनोरमायाः शब्दरत्नव्याख्यायां प्रथम-द्वितीय-पञ्चम-षष्ठाध्यायाः जयादित्यकृताः, शेषाश्च वामनेन विरचिताः स्वीकृताः। प्राचीनैराचार्यैस्तु काशिकायाः उद्धरणानामाधारेणाऽऽदितः पञ्चाध्यायाः जयादित्यविरचिताः, अन्तिमास्त्रयो-ऽध्यायाः वामनकृताः सन्तीति मन्यन्ते। वस्तुतः काशिकालेखनशैलीपर्यवेक्षणेनेदमेव निश्चीयते यदाद्याः पञ्चाध्यायाः जयादित्यकृता अन्त्याश्च त्रयो वामनकृताः सन्ति। जयादित्यापेक्षया वामनस्य लेखोऽतिप्रौढः परिष्कृतश्चास्ति। चीनीयात्रिणा इत्सिङ्गेन स्वभारतयात्रावर्णने जयादित्यमात्रमेव काशिकायाः रचयिता लिखितोऽस्ति, न तेन वामनस्य निर्देशः कृतोऽस्ति। संस्कृतवाङ्मये अनेके ग्रन्थाः द्वाभ्यां लिखिताः, किन्तु तदुद्धरणकर्तारः एकस्यैव नाम यदा कदाचिल्लिखन्ति।

अनेकेषां विदुषां मतमस्ति यन्माघकविरचितशिशुपालवधमहाकाव्यस्य-

**अनुत्सूत्रपदन्यासा[१] सद्वृत्तिः सन्निबन्धना।**
**शब्दविद्येव नो भाति राजनीतिरपस्पषा।।**

(शिशुपालवधम् २/११२)

इति श्लोके सद्वृत्तिपदेन काशिकायाः सङ्केतः, न्यासपदेन च जिनेन्द्रबुद्धि विरचितस्य न्यासस्य सङ्केतोऽस्ति। काशिकावृत्तिरचना काश्यामेवाभवत्। तथा चोक्तं हरदत्तेन पदमञ्जर्यां काशिकाव्याख्यायाम्-

**काशिका[२] देशतोऽभिधानं काशीषु भवा।**

उणादिवृत्तौ[3] उज्ज्वलदत्तोऽप्यमुमर्थं समर्थयते। काशिकापूर्ववर्तिनीषु वृत्तिषु गणपाठो नाऽऽसीत्, परं काशिकायां यथास्थानं गणपाठः सन्निवेशितः। वामनजयादित्याभ्यां प्राचीनवृत्ति-अनुसारिण्येव काशिकायां सूत्राणां व्याख्या कृताऽस्ति, यथा सूत्रार्थज्ञाने पर्याप्तं साहाय्यमुपलभ्यते। काशिकायाः उदाहरणप्रत्युदाहरणे प्रायः प्राचीनवृत्त्यनुसारं स्तः, याभ्यां प्राचीनानामैतिहासिकतथ्यानां ज्ञानमुपजायते।

पाणिनीयव्याकरणस्य व्याख्यायुगः प्रधानतया पंचमशतकात् चतुर्दशशतकपर्यन्तं व्याप्तोऽस्ति। इतः पूर्वं पाणिनेरष्टाध्याय्याः कात्यायनद्वारा वार्तिकानां, पतंजलिद्वारा महाभाष्यस्य च प्रणयनं जातमासीत्, तदनन्तरमेव व्याख्याग्रन्थनिर्माणं कृत्वा तदध्ययनाध्यापनप्रयासस्य सुलभीकरणमजायत।

काशिकाकारेण स्वोपजीव्यग्रन्थान् निर्दिश्य तन्निर्माणकारणं प्रदर्शितम्-

**वृत्तौ भाष्ये तथा धातुनामपारायणादिषु।**
**विप्रकीर्णस्य तन्त्रस्य क्रियते सारसङ्ग्रहः।।**

काशिकायामनेकेषां सूत्राणां वारद्वयं व्याख्यां विधाय द्विप्रकारिकां शब्दसिद्धिं प्रदर्श्य तत्राचार्यमेव प्रमाणं मनुते-''सूत्रार्थद्वयमेव चैतदाचार्येण शिष्याः प्रतिपादिताः। तदुभयमपि ग्राह्यम्।'' तथा चाऽयं निष्कर्षो यद् भगवता पाणिनिनैव स्वयं सूत्राणां प्रवचनं विधाय तत्तात्पर्यादिभिः शिष्याः समवबोधिताः। काशिकायाः उदाहरण-प्रत्युदाहरणैः प्राचीनमैतिहासिकं महत्त्वं प्रस्फुटीभवति। वामनेन काशिकायाः अन्ते तद्वैशिष्ट्यं सम्यक् प्रतिपादितम्, यस्य निर्देशो न्यासकारेणैवं कृतोऽस्ति-

**इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।**
**व्युत्पन्नरूपसिद्धिर्वृत्तिरियं 'काशिका' नाम ।।**

काशिकायाः गूढार्थं सुबोधं विधातुं द्वाभ्यां विद्वद्भ्यां तत्र पाण्डित्यपूर्णे द्वे व्याख्ये लिखिते स्तः। तत्र जिनेन्द्रबुद्धिना काशिकाविवरणपञ्जिका 'न्यास'-टीका लिखिता। हरदत्तस्य व्याख्या-नाम 'पदमञ्जरी' वर्तते।

काशिकायाः सूक्ष्मदृष्ट्या पर्यवेक्षणेनाऽप्ययमेव निष्कर्षो लभ्यते यत् प्रथमद्वितीय-तृतीयचतुर्थपञ्चमाध्यायाः जयादित्यप्रणीताः षष्ठसप्तमाष्टमाध्यायाश्च वामनप्रणीताः। जयादित्यापेक्षया वामनाचार्यस्य भाषाऽतिप्रौढाऽस्ति।

इत्सिङ्गस्य लेखानुसारं जयादित्यस्य मृत्युः सम्भवतः सं. ७१८ वैक्रमाब्दे जाता। यदि इत्सिङ्गलेखस्तस्य भारतयात्रायाः स्वीकृतः कालः समीचीनो भवेत् तर्हि इयं जयादित्यस्य चरमा कालसीमा भविष्यति। काशिकायां (१/३/२३) भारवेः एकः पद्यांशः उद्धृतोऽस्ति।[4]

संस्कृतवाङ्मये वामननामानोऽनेके विद्वांसः प्रसिद्धास्सन्ति। एको वामनः 'विश्रान्तविद्याधर' इत्यभिधेयजैनव्याकरणस्य प्रणेताऽस्ति, द्वितीयः 'अलङ्कारशास्त्रस्वरूपस्य' प्रणेता, तृतीयश्च लिङ्गानुशासनस्य रचयिताऽस्ति। सर्वे एते विभिन्ना आचार्याः काशिकाकार-वामनाचार्यादिभ्यः सर्वथा भिन्न एवाऽऽचार्यः इत्यत्र इदं कारणम्।

**सन्दर्भाः**

१. माघ-शिशुपालवधमहाकाव्यम्, २/११२
२. हरदत्त-पदमञ्जरी, भाग १
३. उज्ज्वलदत्त-उणादिवृत्तिः
४. संशय्य कर्णादिषु तिष्ठते यः। किरात ३/१४

**शोधच्छात्रः, संस्कृतविभागः,**
कलासङ्कायः, काशीहिन्दूविश्वविद्यालयः,
वाराणसी, दूरभाष – ९६७०१२४०७२



# 5

# संस्कृतव्याकरणशास्त्रपरम्परायां बौद्धवैयाकरणस्य चन्द्रगोमिनः योगदानम्

**-हरीशडङ्गवालः**

लोके शिष्टप्रयुक्तपदलक्षणयुक्तवाण्याः तथा च ऋषिप्रयुक्तार्षवाण्याः साधुत्वं प्रकृतिप्रत्ययमाध्यमेन स्फुटीकरणं व्याकरणशास्त्रस्य मूलप्रयोजनं वर्तते। अतः लोकवेदयोः प्रयुज्यमानानां पदानां प्रकृतिप्रत्ययचिन्तनं व्याकरणदर्शनस्य प्रयोजनं वर्तते अतः व्याकरण-दर्शनस्य विभागद्वयं वर्तते-१. शब्दसाधुत्वविषयकं २. पदपदार्थादिचिन्तनं च।

ऋक्तन्त्रानुसारेण व्याकरणशास्त्रस्यैकदेशरूपेणाक्षरसमाम्नायस्य प्रथमः प्रवक्ता ब्रह्मा वर्तते तत्रोल्लिखितम्-"ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्राय इन्द्रो भारद्वाजाय भारद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते[१] इत्याधारेण व्याकरण-शास्त्रस्य प्रतिपदपाठरूपमासीत्। अनया प्रक्रियया सर्वेषां पदानां साधुत्वोपदेशः नाभवत्। फलत्वादनवस्थादोषः, शास्त्रगौरवभयं, शास्त्राननुशासनञ्चेति दोषाः समागताः। अतः कालान्तरे एतान् दोषान् परिष्कृत्येन्द्रेण ऐन्द्रव्याकरणं रचितम्। इन्द्रेण सर्वप्रथमा प्रकृतिप्रत्यययोः कल्पना कृताऽस्ति।

व्याकरणवाङ्मये न केवलं ऋषीणां महर्षीणां वैदिकब्राह्मणानाञ्च योगदानं वर्तते प्रत्युत बौद्धविदुषां जैनविदुषाञ्चापि महत्त्वपूर्णं योगदानमस्ति। बौद्धविद्वद्भिः संस्कृते न केवलं विविधानि विशिष्टानि काव्यानि रचितानि अपितु व्याकरणपरम्परायां भिन्न-भिन्नकाल-खण्डेषु स्वीयं योगदानं प्रदाय संस्कृतव्याकरणधाराः संवर्धिताः सम्पोषिताश्च। कालान्तरे व्याकरणपरम्परायां विभिन्नाः संप्रदायाः अभवन्। एतद्विषये वोपदेवेन स्वस्मिन् 'कविकल्पद्रुमे' ग्रन्थे अष्टौ शाब्दिकवैयाकरणानां नामोल्लिखितानि-

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादि शाब्दिकाः।।**[२]

एषु त्रयः पाणिनिपूर्ववर्तिनः आचार्याः-इन्द्र-काशकृत्स्नापिशलयः बभूवुः, पुनश्च परवर्तिनः अमर-जैनेन्द्रश्चन्द्र-शाकटायनाः बभूवुः। श्रीतत्त्वनिधौ ग्रन्थेऽपि-

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनः।**
**सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्।।**[३]

पाणिनिव्याकरणात्प्राक् पञ्चाशीति शाब्दिकाचार्याणां नामानि प्राप्यन्ते येषु प्रायः आचार्याः व्याकरणग्रन्थान् रचितवन्तः। बौद्धवैयाकरणेषु ऐन्द्रव्याकरणकारः इन्द्रः, चान्द्रव्याकरण-कर्ता-चन्द्रगोमी, भाषावृत्तिकारः-पुरुषोत्तमदेवः, अमरकोशप्रणेता-अमरसिंहः, रूपावतारकारः-धर्मकीर्तिः, काशिकाकारौ-जयादित्यवामनौ, वाक्यपदीयकारः-भर्तृहरिः, सारस्वतव्याकरणकारः-अनुभूतिस्वरूपाचार्यश्चेत्यादयः बभूवुः। एतेषु बौद्धवैयाकरणेषु पाणिन्युत्तरकाले चान्द्रव्याकरणकर्तुः चन्द्रगोमिनः अन्यतमं योगदानं वर्तते।

**आचार्यचन्द्रगोमी**-

केचन विद्वांस इमं चन्द्राचार्यनाम्ना केचन चन्द्रगोमिनाम्ना स्वीकुर्वन्ति। भर्तृहरिणा वाक्यपदीये स चन्द्राचार्यनाम्ना स्वीकृतः-

**पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।**
**स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः।।**[४]

एवं प्रकारेण राजशेखरेणापि राजतरङ्गिण्यां चन्द्राचार्यनाम्ना सम्बोधितः। चन्द्रगोमिनाम्नः उल्लेखः पुरुषोत्तमदेवस्य भाषावृत्तौ, उज्ज्वलदत्तस्य उणादिसूत्रवृत्तौ, शरणदेवस्य दुर्घटवृत्तौ, तथा च सर्वानन्दस्यामरकोशटीकायां प्राप्यते। कुत्रचित् चन्द्रयोगिन्, वज्रचन्द्रयोगिन्, चन्द्रगोपिन्नित्यादयोऽपि शब्दाः दरीदृश्यन्ते। एतेषां नाम्नां सम्बन्धः चन्द्रगोमिना सहाभिन्नोऽस्ति एतेषां मूलनाम चन्द्रैवासीत्, परञ्च गोमिनः उपासनत्वाद् अथवा विशेषपूज्यकारणेन चन्द्रगोमी नामाभवत्। चन्द्राचार्येण पूज्यार्थे 'गोमिन् पूज्ये'(चा० व्या०)इति सूत्रेण गोमिन्शब्दस्य निष्पत्तिः कृता। गोमिन् भगवतो बुद्धस्य शिष्येष्वन्यतमः आसीत्। अतः तस्योपासकत्वाद् चन्द्रगोमीति नामाभवत्।

**स्थानम्**-

प्रायः विद्वांसः चन्द्रगोमिनः जन्मस्थानं बङ्गदेशं स्वीकुर्वन्ति, परञ्च डॉ. हर्षनाथमिश्र-महोदयः स्वीयतर्कबलेन गोमिन्वंशस्य सत्तां काश्मीरक्षेत्रे स्वीकरोति।

चन्द्रगोमिनः जन्मस्थानविषये त्रीणि मतान्युल्लिखितानि सन्ति

१. भारतीयकालगणनाम् आधारीकृत्य युधिष्ठिरमीमांसकेन एनं कालगणना वि.पू. १००० शताब्दी।

२. पाश्चात्येतिहासकाराः पञ्चमशताब्दीं स्वीकुर्वन्ति।

३. लामातारानाथमहोदयः सप्तमशताब्दीं स्वीकरोति।

**कृतयः**-

अनेन महोदयेन व्याकरणशास्त्रसम्बद्धानि अन्यान्यपि शास्त्राणि विरचितानि। तद्यथा- चन्द्रव्याकरणसूत्रं, विंशत्युपसर्गवृत्तिनाम, उणादिवृत्तिः, चन्द्रोणादिवृत्तिनाम, चान्द्रव्याकरण-

वर्णसूत्रवृत्तिश्च इत्येते ग्रन्था: विरचिता:। पुनश्च धातुपाठ-गणपाठोणादिपाठ-लिङ्गानुशासन-परिभाषोपसर्गवृत्ति-वर्णसूत्राण्यपि शास्त्राणि रचितानि सन्ति। पुनश्च लामातारानाथमहोदयद्वारा 'भारत में बौद्ध का इतिहास' इत्यनेन ग्रन्थेन प्रमाणीक्रियते यद् व्याकरणेतरग्रन्थेषु चन्द्रगोमी आहत्य ४३२ (द्वात्रिंशतुत्तरचतु:शतं) ग्रन्थान् रचयामास, येषु १०८ स्त्रोत्राणि, १०८ आध्यात्मिकशास्त्राणि, १०८ लौकिकशास्त्राणि, १०८ शिल्पसम्बद्धानि शास्त्राणि सन्ति।

**चान्द्रव्याकरणस्य वैशिष्ट्यम्-**

चन्द्रगोमिना स्वस्मिन्व्याकरणे न केवलं पाणिनि-कात्यायनयो: सिद्धान्तानां सन्निवेश: कृत:, प्रत्युत महाभाष्यकारस्य सिद्धान्तान् संयोज्य इमं व्याकरणं सम्पूर्णतां प्रति ययौ। चान्द्रव्याकरणस्य विभागद्वयं कृतमस्ति-लौकिकं वैदिकञ्च, लौकिके षडध्याया: सन्ति। प्रत्येकं अध्याये चत्वार: पादा: सन्ति वैदिक-भागेऽपि द्वावध्यायौ आस्तां, सम्प्रति तौ न प्राप्येते, पाणिनिव्याकरणस्यापेक्षयेदं लघुं स्पष्टञ्च वर्तते, यतोहि अत्र त्रिसहस्रदेशीयानि सूत्राणि सन्ति। अस्य ग्रन्थस्य मङ्गलाचरणस्यैव वैशिष्ट्यं प्रतिपादितमस्ति-

**सिद्धं प्रणम्य सर्वज्ञं सर्वीयं जगतो गुरुम्।**
**लघुविस्पष्टसम्पूर्णम् उच्यते शब्दलक्षणम्।।**[५]

अत्र तिस्र: विशेषता: प्रामुख्येन दृश्यन्ते-१. लघु, २. विस्पष्टम्, ३. सम्पूर्णञ्च। अस्य ग्रन्थस्य लघ्वाकारपृष्ठे कारणं वर्तते-सञ्ज्ञासूत्राणामभाव:। पारिभाषिकशब्दानामभावेन विस्पष्टम् , त्रिमुनीनां सिद्धान्तसम्बद्धेन सम्पूर्णतां यातीदं शास्त्रम्। चान्द्रव्याकरणमाधारीकृत्य भिक्षुरत्नमणिना चान्द्रपञ्जिका-ग्रन्थ: विरचित:। यत्र चान्द्रव्याकरणसूत्राणां व्याख्या वर्तते। गुणाकरबौद्धविदुषा 'पात्रीकरणम्' नामक: ग्रन्थ: विरचित:।

यथा पाणिनिव्याकरणशास्त्रे प्रवेशाय लघुकौमुद्या: वैशिष्ट्यं वर्तते तथैव चान्द्रव्याकरणे प्रवेशाय महाकाश्यपविरचित: बालावबोधग्रन्थ: अस्ति। ग्रन्थस्यास्य प्रचलनं संस्कृतभाषा-शिक्षणाय सिंहलदेशे (सम्प्रति श्रीलङ्काक्षेत्रे) आसीत्, सम्प्रति नोपलभ्यते।

शास्त्रस्यास्य प्रमुखं वैशिष्ट्यं वर्तते सञ्ज्ञासूत्राणामभाव:। अत: लिखितमस्ति-

चन्द्रोपज्ञमसंज्ञकं व्याकरणम् (चा. वृ.) अथवा चान्द्रमसंज्ञकं व्याकरणमिति।

सञ्ज्ञासूत्राणां स्थाने सञ्ज्ञाशब्दानां प्रयोग: यौगिकबलेन ज्ञात्वा सञ्ज्ञासूत्राण्यनुपयोगं मत्वा ग्रन्थगौरवभयात् सञ्ज्ञासूत्राणि न प्रयुक्तानि। कारक-समास-संख्यादिषु विषयेषु सञ्ज्ञाशब्दानां प्रयोग आवश्यकमस्ति। कानिचनोदाहरणानि प्रस्तूयते-

१. अनुनासिकम्-अणोऽनुनासिक: (३/४/१५०), अ अत्रानुनासिक: पूर्वस्य (६/४/६)
२. दीर्घ:-अकोऽकि दीर्घ:, दीर्घात्
३. पदम्-रषान्नो ण एकपदे (६/४/१०१)

४-लोपः-द्वित्वे पूर्वस्यात्र लोपः(६/२/१११)

५-समासः-पत्युः समासे (६/२/४१)

पाणिनिप्रयुक्तसंज्ञाशब्दानां स्थाने चान्द्रव्याकरणस्य विधिसूत्रेषु प्रयुक्ताः शब्दाः-

पाणिनिप्रयुक्तसंज्ञाशब्दाः चान्द्रव्याकरणविधिसूत्रेषु प्रयुक्ताः शब्दाः

वृद्धिः (१.१.१)-मृजेरात् (६.१.१), हलि पित्यौत् (६.२.३०)

गुणः (१.१.२)-आददेङ् (५.१.८२), इकोऽदेङ् क्रियायाः (६.१.१)

अनुनासिकः (१.१.८)-ञमः किति वौ च (५.३.१७), (यरो ञमि ञम् वा (६.४.१४०)

प्रगृह्य (१.१.११)-न प्लुतोऽनितौ (५.१.१२३)

घु (१.१.२०)-प्रादिभ्यो दाधः किः (१.३.७१)

निष्ठा (१.१.२६)-ततवति (५.३.६८)

सर्वनाम (१.१.२७)-सर्वादिभ्यः स्मैस्मातौ (२.१.६)

अपृक्तम् (१.२.४१)-अस्तिसिचोऽलः (६.२.३६)

नदी (१.४.३)-स्त्री यूभ्याम् (२.१.३५)

अपादानम् (१.४.३२)-अवधेः पञ्चमी (२.१.८१)

अनेन प्रकारेण धातुपाठस्थलेऽपि पाणिनिव्याकरणवत् चन्द्रगोमिना दशसु गणेषु धातुविभाजनं कृतमस्ति। चन्द्रगोमिना प्रायः संस्कृतभाषायाः व्यावहारिकरूपं संलक्ष्य तेषां धातूनां प्रयोगः कृतः ये प्रायः लोकोपयोगिनः सन्ति। अतः पाणिनेः धातुपाठापेक्षया अयं न्यूनः वर्तते, यत्र आहत्य ११७४ देशीयाः धातवः सन्ति। लोकयप्रयुज्यमानान् धातून् अपाकृत्य लोकव्यवहारधातवः प्रदर्शिताः। स्वयमेव तेन लिखितम्-

**क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।**
**प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः।।**[६]

धातुचयनकाले लोकव्यवहारं दृष्ट्वा ग्रन्थस्यास्य रचना कृता। यत्र सूत्रक्रमः अष्टाध्याय्यानुसारं वर्तते न तु प्रक्रियानुसारम्। चन्द्रगोमी महाभाष्यस्याध्ययनमध्यापनं स्वस्मिन्काले कारितवान् येन महाभाष्यस्य अध्ययनमध्यापनं प्रवर्तितं संवर्धितं सम्पोषितञ्च। अस्मिन् विषये राजशेखरेण स्पष्टं कृतम्-

**चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमम्।**
**प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम्।।**[७]

अतः वक्तुं शक्यते यत् व्याकरणशास्त्रपरम्परायां बौद्धवैयाकरणस्य चन्द्रगोमिनः विशिष्टं योगदानं वर्तते येन तेषां योगदानम् अनस्वीकार्यं अविस्मरणीयञ्च।

**सन्दर्भाः**

१. ऋक्. तन्त्रे

२. कविकल्पद्रुमे

३. श्रीतत्त्वनिधौ

४. भर्तृहरेः वाक्यपदीये

५. चान्द्रव्याकरणे

६. चान्द्रव्याकरणे

७. राजशेखरेण

**सन्दर्भग्रन्थसूची–**


१. व्याकरण शास्त्र का इतिहास–मीमांसक युधिष्ठिर, राजस्थान, भारतीय–विद्या–प्रतिष्ठान

२. संस्कृत के बौद्ध वैयाकरण–डा. जानकीप्रसादद्विवेदी, केन्द्रीय तिब्बतीय शोध संस्थान, सारनाथ

३. संस्कृत शास्त्रों का इतिहास–उपाध्याय बलदेव, वाराणसी, चौखम्बा विद्या भवन।

४. पतंजलिकालीन भारत–अग्निहोत्री प्रभुदयाल, दिल्ली, ईस्टर्न बुक लिंकर्स

५. पाणिनिकालीन भारत वर्ष–अग्रवाल वासुदेव शरण, वाराणसी, चौखम्बा विद्याभवन

६. चान्द्रव्याकरणम्, सम्पादक पं. श्री बेचरदास जीवराज दोशी, प्राच्यविद्याप्रतिष्ठान, जोधपुर, १९६५, पृ० १



शोधच्छात्रः<br>
व्याकरण–विभागः<br>
श्रीरघुनाथकीर्तिपरिसरः<br>
देवप्रयागः, पौडीगढवालः, उत्तराखण्डः




# 6

# भर्तृहरेर्बुद्धिसत्ख्यातवादविमर्शः

**–डॉ. व्रजेन्द्रकुमारसिंहदेवः**

**ख्यातिवादस्य पष्ठभूमिः**

दर्शनभेदेन ख्यातिवादस्य स्वरूपं विद्यते। अत्र वादः सिद्धान्तपर्यायः ख्यातिश्चेन्द्रियार्थ-सन्निकर्षजन्यज्ञानं भवति। ननु ख्यातिशब्दस्य मौलोऽर्थः क इति चेदुच्यते। 'ख्या प्रकथने' इति धातोः स्त्रियां भावे क्तिनि प्रत्यये सति 'ख्याति'शब्दो निष्पन्नः। अमरकोषे[१] प्रसिद्धिं कीर्तिं चार्थं प्रतिपादयति। दर्शनशास्त्रेषु पुनरसौ ज्ञानमात्रमर्थं प्रमामप्रमाञ्च ददाति। न्यायसूत्रानुसारेण विवेकपर्यायः ख्यातिशब्दो ज्ञानमीमांसायां सविकल्पकप्रत्यक्षमभिधत्त इति प्रसिद्धः। सविकल्पक एव प्रामाण्यं निश्चीयते, न निर्विकल्पके। यदुक्तं न्यायसूत्रे-

**न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्**[२]।।

दर्शनशास्त्रेषु सविकल्पं प्रत्यक्षमधिकृत्य यानि मतानि सन्ति तान्येव ख्यातिवादनाम्ना विचार्यन्ते। यत्र खलु भ्रमात्मकस्य इन्द्रियजन्यज्ञानस्य प्राधान्यम्। भ्रमनिरसनद्वारेणैव हि प्रमात्वस्य निर्णयः सम्भवतीति। अनेन प्रकारेण चानुव्यवसायेन प्रामाण्येन च ख्यातिवादः साक्षात् सम्बध्यते। यागशास्त्रेषु[३] अप्रमातः पृथक्करणाय विवकेख्यातिरिति प्रयुज्यते। साहित्यजगति माघोऽपि श्लोकयामास-

**ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य।**
**वाञ्छन्ति तामपि समाधिभृतां निरोद्धुम्**[४]।।

अपि क्षेमराजस्य प्रत्यभिज्ञाहृदये-

**अख्यातिर्यदि न ख्यातिः ख्यातिरेवावशिष्यते।**
**ख्यातिश्चेत् ख्यातिरूपत्वात् ख्यातिरेवावशिष्यते**[५]।।

अत्रायं शब्दः प्रकाशं ज्ञानापरपर्यायमपि ब्रवीति।

सर्वेष्वपि ख्यातिवादेषु प्रायेण भ्रमस्यैव निरूपणं क्रियमाणं दृश्यत इति ख्यातिं भ्रमपर्यायत्वेन मा भ्रमिषुः। सम्यक्ख्यातिमेव स्पष्टयितुं पुरस्कर्तुं च भ्रमस्यासम्यक्ख्यातिरूपस्य निरूपणं क्रियते। भागवतेऽस्मिन् विषये चर्चा विहिता-

**स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी[६]।।**

अत्रायं निष्कर्षः। न जातु भ्रमपर्यायता ख्यातिशब्दस्य। सविकल्पकस्य प्रत्यक्षस्य तादृशस्य ज्ञानमात्रस्येदं नामेति।




## वाक्यपदीये बुद्धिसत्ख्यातिवादविवेकः

बुद्धौ सद् बुद्धिसत्। बुद्धिसतः ख्यातिर्बुद्धिसत्ख्यातिः, तां वदति यः सिद्धान्तः सोऽयं बुद्धिसत्ख्यातिवादोऽस्ति। सर्वं घटपटादिकं वस्तुजातं पूर्वं बुद्धिसदेव पश्चाद् बहिः प्रतीयत इति। भ्रमोऽपि नाम बुद्धिसत्तां जहाति। शुक्तौ रजतं तस्यैव प्रतीयते, रज्जौ वा सर्पः, यस्य बुद्धौ प्रागेव रजतस्य सर्पस्य च सत्ता भवति। यो नाम रजतसर्पौ न बुध्यते, तस्य द्विविषयको भ्रमोऽपि न जायत इति हि व्यावहारिकी स्थितिः। बुद्धौ सन्त एव पदार्थाः स्वप्ने भासन्त इति खलु श्रुतिसिद्धमेव। यदुक्तं बृहदारण्यकोपनिषदि–

न तत्र रथा न रथयोगा भवन्ति। अथ रथान् रथान् रथयोगान् पथः सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता[७]।।

इदमत्रावधेयम्। शशशृङ्गादेरपि बुद्धिसतः ख्यातिर्जायते गगनकुसुमादीन्यपि तथा प्रतीयन्ते। बहिरसन्तोऽपि पदार्था बुद्धौ कृतावस्थानाः प्रतीतिमवगाहन्ते। घटमानयेत्यादावपि घटपदार्थान् बुद्धौ प्रतीत्यैव वक्ता वक्ति श्रोता च शब्दार्थौ बुद्धिस्थीकृत्यैव प्रवर्तते। कुम्भकारो घटं, सुवर्णकारश्च कुण्डलं बुद्धौ व्यवस्थितमेव विषयीकृत्य तथा करोति यथा घटः कुण्डलं वा जन्म लभते।

ग्रामस्य प्राच्यां दिशि आम्राः सन्ति तत्रैव च जटावन्तो वटवृक्षा भवन्ति इत्यत्र बुद्धिविपरिणामस्य व्यवस्थां ददत् प्राह भगवान् पतञ्जलिः -

कश्चित् कञ्चित् तन्तुवायमाह-"अस्य सूत्रस्य शाटकं वय" इति। सः पश्यति, यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाऽभिप्रेता, स मन्ये वातव्यो यस्मिन्नुतं शाटक इत्येतद् भवतीति[८]।

कंसं जघान इत्यादावपि बुद्धिसन्नेव कंसादिः कारकत्वं लभते। अन्यथाऽतीतस्य तस्य कारकत्वमपि विप्रतिषिद्धं स्यात्। तथा चाह भर्तृहरिर्वाक्यपदेये-

**शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते**[९]।।

अपि च-

**यथा सलिलनिर्भासां मृगतृष्णासु जायते।**
**जलोपलब्ध्यनुगुणाद् बीजाद् बुद्धिर्जलेऽसति**[१०]।।

शब्दादर्थप्रतीतिरपि बुद्धिसन्तमर्थमपेक्ष्यते। तथा हि-

**यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः।**
**स बाह्यं वस्त्विति ज्ञातः शब्दार्थस्सम्यगिष्यते**[११]।।

अमुमेवार्थमनुवदति विष्णुपुराणे-

**ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते।**
**ज्ञानात्मकमिदं विश्वं न ज्ञानाद् विद्यते परम्।**
**विद्याविद्ये च मैत्रेय ज्ञानमेवोपधारय**[१२]।।

तथा च भागवते-

**ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।**
**तद् विद्यात्मनो मायां यथाभासो यथा तमः**[१३]।।

अयं भावः। आत्मनि सति वस्तुरूपे यद् भासते न वा भासते कदाचित् सा तादृशी भवति आत्मनो माया। आभासो मृगतृष्णादिस्तमश्च राहुः, असन्नपि भासते। भासमानं च बुद्धावेव ख्यायते। इयं च बुद्धिसत्ख्यातिर्द्विधा दृष्टा, व्यावहारिकी प्रातिभासिकी चेति। प्रापञ्चिकी ख्यातिर्व्यावहारिकी स्वप्नादिविषयिणी च प्रातिभासिकी। स्वरूपदर्शनात् प्राग्व्यावहारिकी ख्यातिर्जायमाना तिष्ठति, सति च स्वरूपदर्शने विलीयते। स्वाप्नी ख्यातिस्तु आत्मदर्शनं विनाऽपि व्यावहारिकेण बाधेन बाध्यते। तथा चाहुः शङ्कराचार्यपादाः-प्राग् ब्रह्मादिदर्शनाद् वियदादि-प्रपञ्चो व्यवस्थितः स्वप्नस्तु प्रतिदिनं बाध्यत इति[१४]।

पाणिनीये वैयाकरणदर्शने बुद्धिसत्तां विहाय नान्या गतिः।

भाष्योक्तमेव मनसिकृत्य कारिकाबन्धं विधाय शब्दार्थविषयिणीं बुद्धिसत्ख्यातिं प्रास्तौत्-

**नादैराहितबीजायामन्त्येन ध्वनिना सह।**
**आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते[१५]।।**

क्षणध्वंसिभिर्वर्णैः शब्दसंघटना संघातात्मिका कथं ख्यातिं लभत इति प्रश्नः। तत्रेदमुत्तरम्। प्रथमध्वनिमारभ्यान्तिमध्वनिपर्यन्तं सर्वेषां ध्वनीनां संस्कारा बुद्धौ जायन्ते। परिपाकं लब्ध्वा च बुद्धावेव शब्दरूपं भजन्ते। अत्रापि बुद्धिसत्ख्यातिं विहाय नान्या गतिः। अपि च यथा क्षीरस्य दधिरूपः परिणामः, बीजस्य चाङ्कुररूपो विकारः क्रममपेक्षते, तथैव क्रमः शब्दानां बुद्धौ जायते। यदुक्तं भर्तृहरेः वाक्यपदीये-

**यथानुपूर्वीनियमो विकारे क्षीरबीजयोः।**
**तथैव प्रतिपतृ षणां नियतो बुद्धिषु क्रमः[१६]।।**

अत्रायमवसरोऽस्ति यत् कथमिव ख्यातिर्बुद्धौ घटते। परिणामे प्रतिक्षणं भिद्यमानां विकाराः कथमेकत्वं लभन्ते। कथञ्च क्षणध्वंसिनां ध्वनीनां सङ्घातरूपः शब्दो जायते। अत्राहुर्भगवान् भर्तृहरिः-

**बुद्ध्येकं भिद्यते भिन्नमेकत्वं चोपगच्छति।**
**बुद्ध्यवस्था विभज्यन्ते सा ह्यर्थस्य विधायिका[१७]।।**

अपि च-

**व्यपदेशिवदेकस्मिन् बुद्ध्या नानार्थकल्पना।**
**तया कल्पितभेदः सन्नर्थात्मा व्यपदिशते[१८]।।**

अत्रैकस्मिन् वर्णे आदित्वान्तत्वादिकल्पना बुद्धावेवाधार्यते। तत्रैक एव वर्णो भेदं लब्ध्वा आदिश्चान्तश्च भवति। भर्तृहरिमतेनार्थस्य बाह्यसत्तां विनापि बुद्धौ शब्दार्थकारता सङ्घटते। तद्यथा-

**अन्तःकरणवृत्तौ च व्यर्था बाह्यार्थकल्पना[१९]।।**

बुद्धिभेदविषये भर्तृहरिः कथयति यदेक एव शब्दो बहूनामर्थानां वृत्तं संश्लिष्टमेव वक्ति, परन्तु व्याख्यातारो बुद्धौ विभागेनैवार्थान् व्याचक्षते, इत्येवं बुद्धिभेदोऽपि घटते। यदुक्तं भर्तृहरिणा-

**अनुस्यूतेव संसृष्टैरर्थे बुद्धिः प्रवर्तते।**
**व्याख्यातारो विभज्यार्थं तान् भेदेन प्रचक्षते[२०]।।**

अवयवान् विहाय नावयवी संघातरूपतां लब्धुमीष्टे। अवयवा अपि परिणामिषु भावेषु क्षणध्वंसिन एव भवन्ति। तथापि घटपटादेः शरीरादेश्चावयविबुद्धिर्जायत इत्यतेत् सर्वं बुद्धिसत्ख्यातिरेव महिमानं व्यनक्ति। भगवता भर्तृहरिणा कथ्यते-

**अङ्गदी कुण्डली चेति दर्शयन् भेदहेतुभिः।**
**चैत्रमीदृशमित्याह बुद्ध्यवस्था-परिग्रहात्[२१]।।**

अपि च-

**सन्नसन् वार्थरूपेषु भेदो बुद्ध्या प्रकल्पते[२२]।।**

इत्येवं बुद्धिसत्ख्यातिवादो भर्तृहरेर्वाक्यपदीये कार्यकारणसम्बन्धं शब्दार्थसम्बन्धं भ्रमञ्च साधु व्याचष्टे। तत्र तत्र ख्यातिवादेषु च साहाय्यं करोतीति शम्।

**सन्दर्भाः पादटिप्पण्यश्च**


१. अमरकोषे, ३.२.९
२. न्या.मु. १३५
३. यागशास्त्रे, २.२६/२.२९
४. शिशुपालवधे, ४.५५
५. प्रत्यभिज्ञाहृदये, ४
६. भागवते, ११/११/१२
७. बृहदारण्यकोपनिषदि, ३/४/३/१०
८. म.भा.-पासू, १/१/४४
९. वाक्यपदीये, ३/७/५
१०. तत्रैव ३/१३/८
११. तत्रैव २/१३/४
१२. विष्णुपुराणे-२/६/५०-५१
१३. भागवते, २/९/३३
१४. ब्रह्मसूत्रे, २/१/१४
१५. वाक्यपदीये, १/८४

१६. तत्रैव, १/९१
१७. तत्रैव, ३/१४/१५
१८. तत्रैव, ३/१४/१६
१९. तत्रैव, ३/१४/९४
२०. तत्रैव
२१. तत्रैव, ३/१४/५७१
२२. तत्रैव, ३/७/३

सहायकाचार्यः
साहित्यविभागः
श्रीभगवानदास-आदर्श-संस्कृत-महाविद्यालयः,
हरिद्वारम् (उत्तराखण्डः)



# 7

# कारकसम्बन्धोद्योतकार: आचार्य: रभसनन्दी

**रामदेव:**

**बलं येन निर्ज्जितं भवपञ्जरम्।**
**निर्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम्।**

संस्कृतं न केवलं भारतस्यैव अपितु सम्पूर्णस्याऽपि विश्वस्य प्राचीनतमा भाषा इति समेऽपि प्राच्यप्रतीच्यभाषाविद: विदन्त्यामनन्ति च। अस्यैव समाश्रयेण पुरा ऋषयो महर्षय: साधका: विद्वांस: अनुसन्धातार: वैज्ञानिका: कलाविद: अन्ये च महान्त: जना: सहस्रेभ्यो वर्षेभ्यो स्वविचाराणां निबन्धनं चक्रु:। परिवर्तितेऽपि काले अधुनाऽपि अस्या: समाश्रयणेनात्मानं गौरवभागनुभवन्त: बहव: कुर्वन्त्येव। अस्या: महत्त्वं वेदेषु पुराणेषु अथ चाऽभियुक्तोक्तिषु अपि बहुधा दृश्यते। तथाहि वेदे देवीं वाचमजनयन्त देवास्तां विश्वरूपा: पशवो वदन्ति। इति। अग्निपुराणे च देवादीनां संस्कृतं स्यात् प्राकृतं त्रिविधं नृणाम् इति। इमामेव श्रुतिपुराणोक्तिपरम्परामनुवदन् अस्या: महत्त्वं च ख्यापयन् आचार्यो दण्डी अप्याह–

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभि:** इति।

अस्या: भाषाया: वैशिष्ट्यमस्ति सुव्यवस्थितं वैज्ञानिकं व्याकरणम्। तैत्तिरीयक-ब्राह्मणेऽपि व्याकरणस्योपादेयता श्रूयते–

**ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुरु, इति तामिन्द्रो मध्यतोऽपक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते** इति।

साधुशबदज्ञानं व्याकरणाधीनत्वात् शब्दरचनाया: वाक्यरचनायाश्च आधार: व्याकरणमेव अस्ति। यथा उद्यानस्य वनस्य वा मनुष्यपशुपक्ष्यादिभ्य: कण्टकाकीर्णतन्त्रीकवचं रक्षकं भवति तथा भाषाया: रक्षकमस्ति व्याकरणम्। भाषाया: साधुत्वासाधुत्वज्ञानम् अनेन भवति।

व्याकरणपरम्पराया: विषये वोपदेवविरचिते कविकल्पद्रुमग्रन्थस्यारम्भे उच्यते–

**इन्द्रश्चन्द्र: काशकृत्स्नापिशली शाकटायन:।**
**पाणिन्यमरजैनेन्द्रा: जयन्त्यष्टौ च शाब्दिका:।।**

अत्र अष्ट वैयाकरणाः स्मृताः। प्राचीनार्वाचीनकालभेदेन वैयाकरणानां परिचयो भवति। प्राचीनवैयाकरणेषु पाणिनेः शब्दानुशासने दश वैयाकरणानां नामोल्लेखः प्राप्यते, अन्यत्र ग्रन्थेषु पञ्चदश वैयाकरणानां नामानि लभ्यन्ते।[1] वैदिकग्रन्थेषु प्रातिशाख्यादिग्रन्थेषु एकपञ्चाशत् आचार्याणां नामानि उद्धृतानि स्मृतानि वा सन्ति। अर्वाचीनवैयाकरणेषु पञ्चदश वैयाकरणानां नामानि युधिष्ठिरमीमांसकेन परिगणितानि।[2] एवम्प्रकारेण व्याकरण-परम्परायां बहवः प्रवक्तार आचार्याश्च स्वीयं योगदानं दत्तवन्तः। तेषु बौद्धवैयाकरणानां योगदानमपि महद् योगदानं वर्तते। कातन्त्रव्याकरणटीकाकारः कुमारलातः, दुर्घटवृत्तिकारः दुर्गसिंहः, काशिकाकारौ जयादित्य-वामनौ, लिङ्गानुशासनकारः हर्षवर्धनः, न्यासकारः जिनेन्द्रबुद्धिः एवञ्च नैके बौद्धधर्मानुयायिनां वैयाकरणानां व्याख्याकाराणां च योगदानं स्मर्त्तव्यमस्माभिः। तेषु बौद्धवैयाकरणेषु अन्यतमो वर्तते–कारकसम्बन्धोद्योतकारः आचार्यः रभसनन्दी। अस्य आचार्यस्य योगदानविषये किञ्चिदत्र प्रस्तूयते–

### आचार्यः रभसनन्दी-

आचार्यः रभसनन्दी बौद्धधर्मानुयायी आसीत् इति मङ्गलाचरणेन[3] अन्यैः उदाहरणैः[4] च ज्ञायते। अनेन व्याकरणस्य कारकविषयं स्वीकृत्य कारकसम्बन्धोद्योत इति ग्रन्थः लिखितः। कारकसम्बन्धोद्योतकारः आचार्यः रभसनन्दी एव अत्र प्रमाणं ग्रन्थारम्भे प्रस्तौति-इहायं कर्ता रभसनन्दिर्नामा बालव्युत्पत्तये संक्षेपतः।[5] ग्रन्थस्य नामपि आचार्यः स्वयमेव प्रमाणयति-आस्तां सरभसो लोकः सम्बन्धोद्योतसिद्धितः।[6]

### रभसनन्देः कालः-

अस्य जीवनपरिचयस्य विषयेऽधिकं स्पष्टरूपेण न वक्तुं शक्यते। परञ्च जीवन-कालनिर्धारणस्य प्रयासं कर्तुं शक्नुमः। रभसनन्दी स्वीये ग्रन्थे वैयाकरणानाम् उद्धरणानि प्रस्तौति। तत्र शर्ववर्म्मणः यथा-तद् यथा विचित्रसूत्रस्य कृत्तिः शर्ववर्म्मणः शर्ववर्म्मणा वा।[7] एवं काशिकाकारस्य यथा-तथा जयादित्योऽपि 'कृत्यानां कर्तरि वा' इत्यत्र सूत्रे एतदेव दर्शयति।[8] दूर्घटवृत्तिकारस्य दुर्गसिंहस्य यथा-शिष्टप्रयोगानुसारेण इनन्ते पर्यायेण कर्मोक्तं भवति इति टीकाकारः।[9] अन्यत्र च अत्र च टीकाकारस्य न सम्मतम्। न चैवं शिष्टप्रयोगानुसारं दृश्यन्ते इति अनादरादस्माभिरुपेक्षित एवायं पक्षः।[10] एवं येषाम् उद्धरणानि प्रदत्तानि ते टीकाकाराः ग्रन्थकाराश्च नवमशताब्दीतः पूर्वमभवन्। तथा कविराजः पञ्चिकायाः टीकायां रभसनन्देः द्वादश कारिकायाः उद्धरणं ददाति। कविराजस्य कालः पञ्चदशशताब्दी वर्तते। जुमरनन्दी अपि संक्षिप्तसारे रभसनन्दीम् उद्धरति। महामहोपाध्यायहरिप्रसादशास्त्रिणः मतानुसारं जुमरनन्देः कालः एकादशशताब्दीतः पश्चाद् वर्तते। एवं प्रकारेण बाह्याभ्यन्तरप्रमाणैः सिद्ध्यति यत् अस्य कालः नवमशताब्दीतः एकादशशताब्दी वर्तते।[11]

**ग्रन्थकर्तुः प्रयोजनम्-**

अस्य ग्रन्थस्य प्रयोजनं मन्दमतीनां कृते वर्तन्ते, येषां बहुपदयोजनायां सन्देहः भवति। यतोहि संस्कृतभाषायां वाग्व्यवहारः वाक्यैः भवति। सर्वदा लघुवाक्यानि एव न भवन्ति। दीर्घवाक्येषु अनेकानि पदानि भवन्ति। अतः मन्दमतयः पदानां सम्बन्धान् न निर्णयितुं शक्नुवन्ति। अत एव रभसनन्दी लिखति-'अतः शब्दो व्यवहारः क्रियमाणो बहुभिरेव पदैः कर्त्तव्य इति ज्ञात्वापि पदसिद्धिमेकैकशः कदाचिन् मन्दमतयो बहुपदयोजनायां संदिहीरन्, अतः कारक-सम्बन्धोद्योतमापादयन्निह स्थित एवायमस्माकं तानुद्दिश्य परिश्रम' इति।[12]

**कारकसम्बन्धोद्योतः-**

आचार्यरभसनन्दिकृतकारकसम्बन्धोद्योतः इत्यस्य ग्रन्थस्य व्याकरणशास्त्रे महत्त्वपूर्णं स्थानं वर्तते। संस्कृतंव्याकरणस्य कारकम् इति विषयं आधारिकृत्य प्रवर्तितोऽयं ग्रन्थः प्रकरणग्रन्थः वर्तते। रभसनन्दिना कारकप्रकरणस्य सम्पूर्णः विषयः पञ्चदश कारिकासु उपस्थापितः। मङ्गलाचरणं पञ्चदश श्लोकमात्रपरिमाणवति[13] कारकसम्बन्धोद्योते प्रकरणे ग्रन्थे प्रथमायां कारिकायां मङ्गलाचरणानन्तरं द्वितीयायाः आरभ्य षष्ठीं कारिकां यावत्' अथ च दशम्यां कारिकायाम् उक्तानुक्तव्यवस्था निरूपिताऽस्ति। अन्यासु कारिकासु विभक्तिनियमाः विवेचिताः सन्ति। ग्रन्थोऽयं कातन्त्रव्याकरणेन सम्बन्धितः वर्तते। कातन्त्रस्य कारकपादात् द्विपञ्चाशत् सूत्रेभ्यः सप्तदशसूत्राणि अत्र उद्धरितानि सन्ति। रभसनन्दी कातन्त्रव्याकरणस्य सूत्राणां वृत्तेः टीकायाश्च ज्ञाता आसीत्। अत एव तेन वृत्तिसहितं कारिकाः लिखिताः। तथा च कारकसम्बन्धविवेचने विविधता नूतनता च आनीता। रभसनन्दी अन्येषां वैयाकरणानां मतानि स्वीकरणे निराकरणे च स्वतन्त्रः प्रतीयते। कारककारकसम्बन्धोद्योते सः यदा अन्यान् टीकाकारान् उद्धरति तदा यदि मतं तस्य संमतं नास्ति चेत् स्पष्टरूपेण निराकरोति।[14]

**रभसनन्दिमतानुसारं कारकसम्बन्धः-**

रभसनन्देः ग्रन्थोक्तप्रयोजनात् एव ज्ञायते यत् बहुपदयोजनायां मन्दमतीनां सन्देहान् दूरीकर्तुं प्रवर्तते सः। एतत्सर्वं पदानां क्रियया सह सम्बन्धं ज्ञात्वा एव कर्तुं शक्यते। अत आचार्यः प्रथमायां कारिकायामेव षट् कारकाणि सम्बन्धश्च स्वीकरोति। उक्तानुक्तभेदेन कारकसम्बन्धः द्विविधः भवति।[15] तत्रैव स्पष्टीकरोति यत् कारकसम्बन्धमिच्छता छात्रेण पदस्य क्रियया सह सम्बन्धं विज्ञाय एव विभक्तिः प्रयोक्तव्या। षट् कारकाणि कानीति विवृणोति-षट् कारकाणि कर्तृ-कर्म्म-करण-सम्प्रदानापादानाऽधिकरणनामानि प्रत्येक-मुक्ताऽनुक्ततया द्विधा द्विप्रकारकाणि वर्तन्ते।[16] तथा सम्बन्धोऽपि उक्तानुक्तभेदेन द्विविधः। एवं क्रियया सह पदानां चतुर्दशविधः सम्बन्धः भवति-1. उक्तः कर्ता, 2. अनुक्तः कर्ता,

3. उक्तं कर्म्म, 4. अनुक्तं कर्म्म, 5. उक्तं करणम्, 6. अनुक्तं करणम्, 7. उक्तं सम्प्रदानम्, 8. अनुक्तं सम्प्रदानम्, 9. उक्तम् अपादानम्, 10. अनुक्तम् अपादानम्, 11. उक्तः सम्बन्धः, 12. अनुक्तः सम्बन्धः, 13. उक्तम् अधिकरणम्, 14. अनुक्तम् अधिकरणञ्चेति। उक्ते कारकसम्बन्धे प्रथमा विभक्तिर्भवति अनुक्ते तु द्वितीयाद्याः विभक्तयः यथायथं भवन्ति।[17] रभसनन्दी सर्वान् भेदान् प्रथमायाः कारिकायाः वृत्तौ उदाहरणपुरस्सरं स्पष्टीकरोति।[18]

आचार्यरभसनन्दिमतानुसारं कारकाणां सामान्यपरिचयः इत्थं वर्तते–

**कर्ता**–कारकसम्बन्धोद्योतकारस्य मतानुसारं यः क्रियां करोति सः कर्तृसंज्ञो भवति। यथा–देवदत्तः काष्ठैः स्थाल्यामोदनं पचति। अत्र पाकक्रियायां देवदत्त एव प्रयत्नवान्। अतः सः कर्ता वर्तते। कर्ता द्विविधः–स्वतन्त्रः हेतुश्च।[19] यः करोति सः कर्ता। अत्र उदाहरणे देवदत्तः स्वतन्त्रः कर्ता वर्तते। तमेव कर्तारं क्रियायां प्रयुङ्क्ते सः प्रयोजको हेतुः अथवा कारयति यः सः हेतुः। हेतुसंज्ञा कर्तृसंज्ञा एव। हेतुः त्रिप्रकारको भवति प्रेषकोऽध्येषक आनुकूल्यभागी च। प्रेषकः प्रभुत्वेन कर्तारं नियुङ्क्ते। यथा–देवदत्तः भृत्येन कटं कारयति। अत्र कटकरणाय भृत्यमाज्ञापूर्वकं नियुङ्क्ते अतः देवदत्तः प्रेषकहेतुकर्ता वर्तते। सत्कारकपूर्वकं नियुङ्क्ते स अध्येषकः। यथा–देवदत्तः गुरुं भोजयति। न प्रेषते न अध्येषते परञ्च प्रयोजकस्य क्रियाकरणाय आनुकूल्यभाव एव आनुकूल्यभागी। सः च सचेतनोऽचेतनश्च। सचेतनो यथा–सुपुत्रो जनकं हर्षयति। अचेतनो यथा–कारीषोऽग्निरध्यापयति माणवकम्। एवं कर्तुः भेदाः उक्ताः। पुनः उक्तानुक्तभेदेन कर्ता द्विविधः। यदा कर्ता अनुक्तः भवति तदा अनुक्तकर्तरि तृतीया विभक्तिः वेदितव्या।[20] उक्ते कर्तरि तु प्रथमा एव।

**1. उक्तः कर्ता यथा**–जयति बुद्धधर्मः। अत्र उक्ते कर्तरि प्रथमा इति न्यायात् प्रथमा उक्ते स्यात् प्रथमैव हि। आख्यात-कृत्-तद्धितप्रत्ययानां समासस्य च कर्तरि विहितत्वाद् उक्तकर्ता इत्युच्यते।

**2. अनुक्तकर्ता यथा**–जीयते बुद्धधर्मेण इति। अत्र प्रत्ययः न कर्तरि विहित इति। अतः अनुक्तत्वात् कर्तरि तृतीया।

**कर्म**–कर्तुः क्रियया यत् क्रियते तत् कारकं कर्मसंज्ञं भवति। यत् क्रियते तत् कर्म इति। निर्वर्त्त्यं विकार्यं प्राप्यं चेति भेदेन कर्म त्रिविधं भवति।[21] पुनः उक्तानुक्तभेदेन कर्म द्विविधम्। यदा अनुक्तं कर्म भवति तदा द्वितीया विभक्तिः प्रयोक्तव्या।[22] उक्ते कर्मणि तु प्रथमा एव।

**1. उक्तं कर्म यथा**–कटः क्रियते, ओदनः पच्यते, ग्रामो गम्यते इति। अत्र उक्ते कर्मणि प्रथमेति न्यायात् प्रथमा इति। आख्यात-कृत्-तद्धितप्रत्ययानां समासस्य च कर्मणि विहितत्वाद् उक्तं कर्म इत्युच्यते।

**2. अनुक्तं कर्म यथा**-कटं करोति, ओदनं पचति इति। अत्र प्रत्ययो न कर्मणि विहित अत एव अनुक्तत्वात् कर्मणि द्वितीया।

**करणम्**-कर्ता येन साधनेन क्रियां सम्पादयति, येन कर्तुः क्रिया सिद्धा भवेत्, क्रियासिद्धौ प्रकृष्टोपकारकं विवक्षितं तत् कारकं करणसंज्ञं भवति। साधकतमं करणमिति पाणिनेः वचनात् क्रियासिद्धौ अत्यन्तावश्यकं कारकं येन विना क्रिया न सम्भवेत् तत् करणम्। रभसनन्दिमतानुसारं करणं द्विविधं-बाह्याभ्यन्तरं चेति। शरीराश्रितम् आभ्यन्तरम्, तस्मात् अन्यद् बाह्यम्।[23]

**आभ्यन्तरं यथा**-मनसा मेरुं गच्छति, चक्षुषा दृष्टम्।

**बाह्यं यथा**-अश्वेन गच्छति, दात्रेण लुनाति।

अनुक्ते करणे तृतीया विभक्तिर्भवति, कारिकायां प्रायश इति वचनेन अन्याऽपि विभक्तिः यथाभिधानं भवति इति।[24] यथा-स्तोकेन मुक्तः, स्तोकान्मुक्तः, सर्पिषो जानीते इति। उक्ते करणे प्रथमा एव।

**1. उक्तं करणं यथा**-स्नानीयं चूर्णम् इति। अत्र कृत्यल्युटोऽन्यत्रापि इति वचनात् करणेऽनीयः भवति। उक्तत्वात् करणे प्रथमा इति।

**2. अनुक्तं करणं यथा**-स्नाति चूर्णेन इति। अत्र करणे प्रत्ययः न विहित अत अनुक्तत्वात् करणे तृतीया।

**सम्प्रदानम्**-रभसनन्दिना सम्प्रदानस्य लक्षणं कृतं तद् यथा-पूजानुग्रहकाम्यया यस्मै दातुमिच्छा तत् कारकं सम्प्रदानसंज्ञं भवति। अनुमन्तृ-प्रेरकं-अनिराकर्तृभेदात् त्रिविधं भवति सम्प्रदानम्।[25] अनुमन्यते तद् अनुमन्तृ, यथा-गुरवे गां ददाति। दातारं प्रेरयति तत् प्रेरकम्, यथा-बटवे भिक्षां ददाति। न अनुमन्यते, न प्रेरयति, न निराकरोति, तृष्णीमास्ते तद् अनिराकर्तृ, यथा-बुद्धाय मालां ददामि। अनुक्ते सम्प्रदाने चतुर्थी विभक्तिर्भवति,कारिकायां प्रायश इति वचनेन अन्यापि विभक्तिः यथाभिधानं भवति इति।[26] यथा-दास्या सम्प्रयच्छते कामुकः। उक्ते सम्प्रदाने प्रथमा एव।

**1. उक्तं सम्प्रदानं यथा**-दानीयो ब्राह्मणः इति। कृत्-तद्धिप्रत्ययानां समासस्य च सम्प्रदाने विहितत्वाद् उक्तं सम्प्रदानम् इत्युच्यते। अत्र कृत्यल्युटोऽन्यत्रापि इति विधानेन सम्प्रदाने अनीयः। उक्तत्वात् सम्प्रदाने प्रथमा इति।

**2. अनुक्तं सम्प्रदानं यथा**-ददाति ब्राह्मणाय इति। अत्र प्रत्ययः न सम्प्रदाने विहितः। अनुक्तत्वात् सम्प्रदाने चतुर्थी इति।

**अपादानम्**-कारककारकसम्बन्धोद्योतेऽपादानस्य लक्षणं एवं विद्यते-अपायं प्रत्यवधिभूतस्य सीमारूपेण विवक्षितस्य कारकस्य अपादानसंज्ञा भवति।[27] चलमचलं भेदेन अपादानं द्विविधं भवति।

**चलं यथा**-धावतोऽश्वात् पतति।

**अचलं यथा**-वृक्षात् पत्रं पतति। पुनः उक्तानुक्तभेदेन द्विविधम्, अनुक्ते अपादाने पञ्चमी भवति,[28] उक्ते तु प्रथमा एव।

1. **उक्तमपादानं यथा**-भीमो राक्षसः इति। भीमादयोऽपादाने (4.6.51) इति विधानेन उक्तत्वात् अपादाने प्रथमा।

2. **अनुक्तमापादानम्**-बिभेति राक्षसात् इति। नात्र अपादाने प्रत्ययो विहित अत अनुक्तत्वात् अपादाने पञ्चमी इति।

**अधिकरणम्**-तथाऽऽधारे तु सप्तमी[29]-कारिकायाः वृत्तौ रभसनन्दिना अधिकरणस्य लक्षणमेवं कृतम्-आधारश्च क्रियाश्रयभूतः कर्त्ता कर्म्म वा यत्र आध्रियते, यत्र कर्त्तृकर्मणी अवतिष्ठते स आधारः। चतुर्विधः-औपश्लेषिकोऽभिव्यापको वैषयिकः सामीपिकश्च।[30] औपश्लेषिकः यथा-कटे आस्ते, अभिव्यापकः यथा-तिलेषु तैलम्, वैषयिकः यथा-दिवि देवाः सन्ति, सामीपिकः यथा-गङ्गायां घोषोऽस्तीति। पुनः उक्तानुक्तभेदेन द्विविधम्, अनुक्ते अधिकरणे सप्तमी विभक्तिर्भवति, उक्ते तु प्रथमा एव।

1. **उक्तमधिकरणं यथा**-आसनं पीठम् इति। अत्र करणाधिकरणयोश्च (4.5.95) इत्यनेन अधिकरणे ल्युट्। अत्र अधिकरणे प्रत्ययविहित्वात् उक्ते अधिकरणे प्रथमा इति।

2. **अनुक्तमधिकरणं यथा**-आस्ते पीठे, गङ्गायां घोषः, तिलेषु तैलम्, दिवि देवाः। अत्र अनुक्तेऽधिकरणे सप्तमी इति।

**सम्बन्धः**-आचार्येण रभसनन्दिना प्रथमायां कारिकायां षट् कारकाणि स्वीकरोति। तत्रैव सम्बन्धोऽपि उक्तानुक्तभेदेन द्विविधः इति व्यनक्ति। उक्ते तु प्रथमा एव इति स्पष्टम्। परञ्च अनुक्ते सम्बन्धे का विभक्तिर्भवति? तदा उच्यते-सम्बन्धेऽथ भवेत् षष्ठी निर्ण्णयस्तावदीदृशः।[31]

1. **उक्तः सम्बन्धो यथा**-गोमान् देवदत्तः इत्यत्र गावो विद्यन्ते यस्य स गोमान् इति। अत्र तदस्यास्तीति सम्बन्धे मतुप्-प्रत्ययः। एवमुक्तत्वात् सम्बन्धे प्रथमा।

2. **अनुक्तः सम्बन्धः यथा**-देवदत्तस्य गावो विद्यन्ते, राज्ञः पुरुषः, वृक्षस्य शाखा इति। एवमनुक्तत्वात् सम्बन्धे षष्ठीति।

### आचार्यरभसनन्दिना कारकसम्बन्धोद्योते चर्चिता विषयाः-

आचार्यः प्रथमायां कारिकायां षट् कारकाणि तेषामुक्तानुक्तसम्बन्धश्च इति स्वीकरोति। अधुना जिज्ञासा भवति यत् कथं कारकषट्कसम्बन्धः? वस्तुतः क्रियया सह यस्य पदस्य अन्वयः भवति तत् कारकम्। परन्तु कीदृशोऽयमन्वयः भवति? इति जिज्ञासायां

द्वितीयां कारिकायां यथा–

**यो यत्र प्रत्ययो जातः समासो यत्र वा भवेत्।**
**स एनं वक्ति युञ्जानस्तस्य लिङ्गेन संख्यया।।**[32]

अत्र आचार्यस्य मतं यत् लिङ्गेन संख्यया च अन्वयः भवति। प्रत्ययः समासो वा यमर्थं वक्ति, तस्यैव लिङ्गसंख्याभ्यां युक्तो भवति। लिङ्गं नाम स्त्रीपुंनपुंसकमिति। संख्या नाम एकवचन-द्विवचन-बहुवचनम् च। कृत्तद्धित-प्रत्ययेषु समासेषु च लिङ्गसख्यानियमः ज्ञातव्यः। लिङ्गनियमः यथा–कारिका स्त्री, कारकः पुरुषः, कारकं कुलम्, वैयाकरणः पुरुषः, वैयाकरणी स्त्री, वैयाकरणं कुलम्। संख्यानियमः यथा–कारिके स्त्रियौ, कारिकाः स्त्रियः, कारकौ पुरुषौ, कारकाः पुरुषाः, कारके कुले, कारकाणि कुलानि। एवं सर्वत्र ज्ञेयम्।

**आख्यातिकप्रत्ययस्य तिङ्**-प्रत्ययस्य वा लिङ्गेन अन्वयः न भवति, वचनमात्रेण एव अन्वयः।[33] यथा–ओदनं पचति सूपकारः, ओदनं पचतः सूपकारौ, ओदनं पचन्ति सूपकाराः, ओदनं पचति स्त्री, ओदनं पचतः स्त्रियौ, ओदनं पचन्ति स्त्रियः, ओदनं पचति कुलम्, ओदनं पचतः कुले, ओदनं पचन्ति कुलानि। एवमेव सर्वत्र संख्यानियमः मध्यमपुरुषे उत्तमपुरुषे च ज्ञातव्यः।

उक्ते कारके सम्बन्धे च अपि सर्वत्र लिङ्गसंख्यानियमः ज्ञातव्यः। यथा-त्वया ओदनः पच्यते, मया कटः क्रियते, त्वया भूयते, मया स्थीयते। भावे यदा प्रत्ययः भवति तदा किञ्चिदपि उक्तं न भवति। अकर्मकधातुभ्यः भावे प्रत्ययः भवति, परञ्च सकर्मकधातुभ्यः अपि भावे प्रत्ययः भवितुमर्हति यदि कर्म न विवक्ष्यते।[34] यथा–पठ्यतेऽस्माभिः, गम्यते देवदत्तेन। आचार्यः लिङ्गसंख्याभियोगः प्रायः सर्वत्र दर्शनात् वेदानां प्रमाणत्वात् च एवं प्रयोगः सर्वेषां सम्मतः इति स्वीकरोति।[35]

यदा वाक्ये अनेके कर्त्तारः भवन्ति तदा विहितः प्रत्ययः मुख्यमेव कर्त्तारं गृह्णाति अन्वेति वा, वाक्ये मुख्यकर्तुरेव प्राधान्यं भवति।[36] प्रयोजककर्त्ता मुख्यकर्त्ता च प्रयत्नवत्त्वात् ज्ञातव्यः। यथा–विष्णुमित्रः यज्ञदत्तेन देवदत्तेन ओदनं पाचयति। अत्र प्रधानकर्त्ता विष्णुमित्रः वर्तते, उक्तत्वात् प्रथमा, यज्ञदत्तदेवदत्तौ गौणकर्त्तर्यनुक्तत्वात् सर्वत्र तृतीया एव। अनेककर्तृके एषा सार्वत्रिकी नीतिः इति।[37]

व्याकरणे द्विकर्मकधातवः परिगणिताः सन्ति। तत्र रभसनन्देः अभिमतं यत् यदा दूहादेर्धातुभ्यः[38] कर्मणि प्रत्ययः भवति तदा गौणकर्म एव उक्तं भवति, प्रधानं तु अनुक्तम्, नीवहादेर्धातुभ्यः[39] यदा कर्मणि प्रत्ययः भवति तदा प्रधानकर्म उक्तं भवति, गौणं तु अनुक्तम्।[40] दुहादेरुदाहरणं यथा–गोपालकेन गौः पयो दुह्यते, अत्र गौः इति गौणकर्म, कर्मणि प्रत्ययविहितत्वात् उक्ते कर्मणि प्रथमा। पयः इति प्रधानकर्म, अनुक्तत्वात् द्वितीया। नीवहादेरुदाहरणं यथा–देवदत्तेन भारो ग्राम् नीयते, अत्र भार इति पदं प्रधानकर्म,

उक्तत्वात् प्रथमा, ग्राममिति पदं गौणकर्म, अनुक्तत्वाद् द्वितीया।

विशेषणस्य समानाधिकरणे च एका विभक्तिर्भवति एकं वचनं च इत्यत्र आचार्यः प्रमाणं प्रदर्शयति–

**या विशेष्ये दृश्यते लिङ्गसंख्याविभक्तयः।**
**प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे।।**[41]

यथा–दर्शनीयः कटः विपुलः क्रियते, दर्शनीयौ कटौ विपुलौ क्रियेते, दर्शनीयाः कटाः विपुलाः क्रियन्ते इति।

**उपसंहारः-**

एवं रभसनन्दिना कारकप्रकरणस्य विषयाः स्वीये ग्रन्थे वृत्तिसहितासु चतुर्दशकारिकासु विस्तरेण विवेचिताः। बौद्धधर्मावलम्बित्वात् अत्र उदाहरणेषु तस्य प्रभावोऽपि दृश्यते। अत्र अस्मिन् ग्रन्थे बहुत्र उदाहरणानि बौद्धधर्मेण प्रभावितानि सन्ति। वाक्ये प्रयुक्तानां पदानां कथं क्रियया सह अन्वय अस्माभिः विज्ञेयः? एतदर्थं भाषाभ्यासरतानां सुबोधबालानां कृते, शिष्टप्रयोगज्ञातृणां कृते, अनुसन्धातृणां कृते, वैयाकरणानां कृते च महदुपकारकोऽयं कारकसम्बन्धोद्योतः ग्रन्थः वर्तते। बौद्धवैयाकरणस्य रभसनन्देः व्याकरणपरम्परायां तत्रापि कारकसम्बन्धज्ञानाय महद्योगदानम् इत्यनेन ज्ञायते।

**सन्दर्भाः-**


1. संस्कृत व्याकरणशास्त्र का इतिहास, पृष्ठसंख्या 63
2. संस्कृत व्याकरणशास्त्र का इतिहास, पृष्ठसंख्या 69-72
3. भग्नं मारबलं येन निर्जितं भवपञ्जरम्।
   निर्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम्।। 1
4. जयति बुद्धधर्म्मः, सर्व ज्ञाता सुगतः इत्यादीनि।
5. कारकसम्बन्धोद्योतः पृष्ठसंख्या 1
6. कारकसम्बन्धोद्योतः पृष्ठसंख्या 31
7. कारकसम्बन्धोद्योतः पृष्ठसंख्या 24
8. कारकसम्बन्धोद्योतः पृष्ठसंख्या 22
9. कारकसम्बन्धोद्योतः पृष्ठसंख्या 11
10. कारकसम्बन्धोद्योतः पृष्ठसंख्या 17
11. कारकसम्बन्धोद्योतः, प्रस्तावना पृष्ठसंख्या XVI
12. कारकसम्बन्धोद्योतः पृष्ठसंख्या 31
13 कारकसम्बन्धोद्योतः पृष्ठसंख्या 1-2

14. इह गत्यर्थकर्म्मणि कृत्प्रयोगेऽपि न षष्ठी, अभिधानादिति कश्चित्। तन्मते ग्रामं गन्ता देवदत्तः, ग्रामाय गन्ता देवदत्तो वा। एवं ग्राम् गमयिता देवदत्तस्य यज्ञदत्तः,ग्रामायेति वा, इत्यादिकं भवति। अत्र च टीकाकारस्य न संमतम्। न चैवं शिष्टप्रयोगाः दृश्यन्ते इति अनादरादस्माभिरुपेक्षित एवायं पक्षः। कारकसम्बन्धोद्योतः पृष्ठसंख्या 17
15. षट् कारकाणि सम्बन्ध उक्ताऽनुक्ततया द्विधा।
    विभक्तिश्चेति निश्चेयमवश्यं योगमिच्छता।।2।।
16. कारकसम्बन्धोद्योतः पृष्ठसंख्या 3
17. उक्तादन्यमनुक्तं स्याद् उक्ते स्यात् प्रथमैव हि।
    अनुक्ते तु भवन्त्यन्या द्वितीयाद्याः यथायथम् ।।10।।
18 कारकसम्बन्धोद्योतः पृष्ठसंख्या 4-6
19. कारकसम्बन्धोद्योतः पृष्ठसंख्या 15
20. कर्तृसंज्ञे तृतीया स्याद्। कारकसम्बन्धोद्योतः पृष्ठसंख्या 14
21. तत्र यन्निवर्त्यते निष्पाद्यते अविद्यमानमेवोत्पाद्यते तन्निवर्त्त्यम्, यथा-कुलालः कुम्भं करोति। यत् विक्रियते सदेवान्यथा क्रियते तद् विकार्यम्। यथा-काष्ठं दहति देवदत्तः। यद् अपूर्वं नोत्पद्यते नाप्यन्यथा क्रियते अपितु सदेव प्राप्य विषयीक्रियते तत् प्राप्यम्। यथा-वेदमधीते विप्रः। कारकसम्बन्धोद्योतः पृष्ठसंख्या 16
22. द्वितीया कर्म्मकारके। कारकसम्बन्धोद्योतः पृष्ठसंख्या 14
23. कारकसम्बन्धोद्योतः पृष्ठसंख्या 25
24. तृतीया करणे प्रायश् ..। कारकसम्बन्धोद्योतः पृष्ठसंख्या 25
25. अनुमन्त्रनिराकृर्तृ प्रेरकं त्याग कारणम्। व्याप्येनाप्तं, ददातेस्तु सम्प्रदानं प्रकीर्त्तितम् घ्कारकसम्बन्धोद्योतः पृष्ठसंख्या 26
26. प्रायश्चतुर्थी संप्रदानतः। कारकसम्बन्धोद्योतः पृष्ठसंख्या 25
27. कारकसम्बन्धोद्योतः पृष्ठसंख्या 26
28. पञ्चमी स्यादपादाने ..। कारकसम्बन्धोद्योतः पृष्ठसंख्या 25
29. तृतीया करणे प्रायश्चतुर्थी संप्रदानतः। पञ्चमी स्यादपादाने तथाधारे तु सप्तमी 'कारिका 14' कारकसम्बन्धोद्योतः, पृष्ठसंख्या 25
30. तत्र उपश्लेषः सम्भोगः, तत्र भव औपश्लेषिकः, य आधेयमभिव्याप्य तिष्ठति सोऽभिव्यापकः, विषयो ह्यनन्यत्वभावो वैषयिकः, समीपे निकटे भवः सामीपिकः। कारकसम्बन्धोद्योतः पृष्ठसंख्या 27-28
31. कारकसम्बन्धोद्योतः कारिका 15, पृष्ठसंख्या 28
32. कारकसम्बन्धोद्योतः कारिका 3, पृष्ठसंख्या 6
33. आख्यातिकप्रत्ययस्तु न लिङ्गं ग्रहितुमर्हतीत्युक्तस्य सख्यामात्रुपादत्ते।
    कारकसम्बन्धोद्योतः पृष्ठसंख्या 7
34. कारकसम्बन्धोद्योतः, पृष्ठसंख्या 8

35. लिङ्गसख्याभियोगश्च प्रायो भवति दर्शितः। वेदाः प्रमाणमित्यादि प्रयोगो येन सम्मतः कारकसम्बन्धोद्योतः पृष्ठसंख्या 9
36. मुख्यं कर्त्तारमाचष्टे प्रत्ययोऽनेककर्तृके। मुख्यः प्रयोजको ज्ञेयः प्रयुक्तो नापरैर्यदि कारकसम्बन्धोद्योतः पृष्ठसंख्या 9
37. कारकसम्बन्धोद्योतः, पृष्ठसंख्या 9
38. दुहि-याचि-रुधि-प्रच्छि-चिञामुपयोगनिमितमपूर्वविधौ। ब्रूवि-शासि-गुणेन च यत् सचते तदीर्तितमाचरितं कविना, जयत्यर्थयतीमन्थिस्तुर्यो दण्डयतीत्यपि। एभिः सह बुधैर्ज्ञेया द्वादशैव दुहादयः, कारकसम्बन्धोद्योतः, पृष्ठसंख्या 10
39. नीवहौ हरतिश्चैव तथा कृषिविलेखने। चत्वार एव निर्दिष्टा नीवहद्या द्विकर्मकाः कारकसम्बन्धोद्योतः, पृष्ठसंख्या 10
40. दुहादेर्गौणकं कर्म्म नीवहादेः प्रधानकम्। कारकसम्बन्धोद्योतः, पृष्ठसंख्या 9।
41. कारकसम्बन्धोद्योतः, पृष्ठसंख्या 21

**सन्दर्भग्रन्थाः-**

1. कारकसम्बन्धोद्योतः, सम्पादक—डा. हरिप्रसाद शास्त्री, राजस्थान पुरातन ग्रन्थमाला, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर (राजस्थान)
2. संस्कृत व्याकरणशास्त्र का इतिहास, युधिष्ठिर मीमांसक।



# 9

# भर्तृहरिकृते वाक्यपदीये भाषावैज्ञानिकतत्त्वानि

-मनीषजुगरानः

**शोधसारः–**

आचार्यभर्तृहरिविरचितं वाक्यपदीयं व्याकरणग्रन्थेष्वन्यतमं स्थानं भजते। वाक्यञ्च पदञ्च वाक्यपदे ते अधिकृत्य कृतो ग्रन्थो वाक्यपदीयमिति। इदञ्च वाक्यपदीयं ब्रह्म-पद-वाक्याख्येषु त्रिषु काण्डेषु विभक्तं वर्तते। यत्र संस्कृतव्याकरणसम्बन्धीनि भाषासम्बन्धीनि च नैकविधानानां तत्त्वानां वर्णनं कृतं वर्तते। व्याकरणशास्त्रस्य स्वतन्त्रदर्शनप्रतिपादितत्वाद् वाक्यपदीयं तद्दार्शनिकग्रन्थोऽपि मन्यते। वाक्यपदीये भाषाविज्ञान-सम्बन्धीनि कानि-कानि तत्त्वानि विवेचितानीत्युद्देश्यं मनसि निधाय प्रकृतेऽस्मिन् शोधपत्रे वाक्यपदीये निरूपितानि भाषावैज्ञानिकतत्त्वान्येव विवेचितानि। तत्रापि विशिष्य शोधपत्रेऽस्मिन् वाक्यपदीये निरूपितः भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानं, पदविज्ञानं, वाक्यविज्ञानम् अर्थविज्ञानञ्चेत्यादीनां विवेचनं विश्लेषणञ्च कृतं वर्तते। तेषां विवेचनान्निष्कर्षोऽयमवाप्तः यद् वाक्यपदीये आचार्येण भर्तृहरिणा भाषाविज्ञानसम्बन्धीनि नैकानि तत्त्वानि विवेचितानि वर्तन्ते यानि च अद्यापि भाषाशास्त्रिणः अत्यन्तमुपकुर्वन्ति।)

**सङ्केतशब्दाः ( key-words )–**

वाक्यपदीयम्, भाषाविज्ञानम्, भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानम्, पदविज्ञानम्, वाक्यविज्ञानम्, अर्थविज्ञानम्।

**भूमिका** (Introduction)–

भाषा समाजस्य विचारविनिमयस्य भावाभिव्यक्तेश्च मुख्यं साधनं वर्तते। व्यक्तवाग्रूपेण यस्या अभिव्यक्तिः क्रियते सा भाषेत्युच्यते। भाषया हि मानवाः स्वीयान् विचारान् भावांश्च अभिव्यक्तीकर्तुं सक्षमा भवन्ति। विनैनां कश्चनापि स्वाभिप्रायं सर्वथा बोधयितुन्नार्हति। निखिलेऽस्मिन् जगति यत्किमपि कर्म प्रवर्तते तत्सर्वं भाषाश्रितमेवेति। भाषाया महत्त्वं प्रतिपादयित्रा काव्यादर्शकारेण आचार्येण दण्डिना प्रोक्तं यत् समग्रमपि लोकत्रयं भाषाज्योतिरेव प्रकाशयति, भाषाज्योतिर्विना सम्पूर्णमपि भुवनत्रयमन्धकारमयं स्यात्–

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**[१]

**उक्तञ्च भर्तृहरिणा–**

**वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।।**[२]

अर्थाद् यथा अग्नेः प्रकाशकत्वं स्वरूपं वर्तते तथैव ज्ञानस्यापि शाश्वती वाग्रूपता वर्तते। यदीयं निष्क्रामेत् तर्हि उत्पन्नोऽपि प्रकाशो न प्रकाशेदिति यतः सेयं वाग्रूपता प्रत्यवमर्शिनी वर्तते। अपि च लोकेऽस्मिन् तादृशं किञ्चन ज्ञानं नहि वर्तते यच्च शब्दानुगमाद् ऋते विद्यते। अतः सर्वमपि ज्ञानं शब्देनैव (भाषयैव) संसृष्टमिव भासते।

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**[३]

इत्थं ज्ञानगङ्गाप्रवाहिका भाषा सर्वस्मिन्नपि क्षेत्रे मानवं सततमुपकरोति।

**भाषाविज्ञानम्–**

व्यवस्थितं तर्कयुक्तञ्च विशिष्टं ज्ञानमेव विज्ञानमिति। एवं भाषाया वैज्ञानिकमध्ययनं यत् शास्त्रं करोति तद् भाषाविज्ञानमिति। किं नाम भाषा। भाषायाः उत्पत्तिः कथमभूत्। भाषा कथं विकसिता भवति। कथञ्च भाषा प्रयुज्यते। भाषायाः सूक्ष्मतमावयवाः के। तदुच्चारणविधयः के। लोकेऽस्मिन् प्रयुज्यमानभाषासु मिथः कीदृशः सम्बन्धो वर्तते चेत्यादीनां भाषासम्बपद्धानां विविधप्रश्नानां जिज्ञासानाञ्च भाषाविज्ञानं वैज्ञानिकरीत्या समाधानं प्रस्तौति। इत्थं भाषाविज्ञानं तादृशं शास्त्रं वर्तते यद् भाषायाः सर्वाङ्गीणं विवेचनात्मकं वैज्ञानिकञ्चाध्ययनं करोति। पी.डी. गुणेमहोदयेन भाषाविज्ञानमित्थं परिभाषितम्–

Comparative Philology or simply philology is the Science of Language-Philology strictly means the study of a language from the literary point of view.
(An Introduction to Comparative Philology, p-1)

**मङ्गलदेवशास्त्रिमहोदयानुसारम्-**

भाषाविज्ञानं तद्विज्ञानं वर्तते यद्द्वारा सामान्यतो मानवीयभाषाणां, कस्याश्चिद् विशिष्टभाषायाः संरचनायाः तदैतिह्यस्य, विविधभाषाणां, प्रादेशिकभाषाणामुपभाषाणाञ्च पारस्परिकसमानतानां विशेषतानाञ्च तुलनात्मकमध्ययनं क्रियते।

(तुलनात्मक भाषाशास्त्र, पृ-३)

**शोधोद्देश्यानि (Objectives)–**

प्रकृतमिदमध्ययनं भर्तृहरिकृते वाक्यपदीये भाषावैज्ञानिकतत्त्वानां परिशीलनात्मकं वर्तते।

अध्ययनमिदमधोलिखितोद्देश्यान्याश्रित्य विहितम्–

भर्तृहरिकृते वाक्यपदीये वर्णितानां भाषावैज्ञानिकतत्वानां परिशीलनम्।
भर्तृहरिकृते वाक्यपदीये निरूपितस्य भाषोत्पत्तिसिद्धान्तस्य विमर्शनम्।
भर्तृहरिकृते वाक्यपदीये वर्णितस्य ध्वनिविज्ञानस्य समीक्षणम्।
भर्तृहरिकृते वाक्यपदीये विवेचितस्य पदविज्ञानस्य समीक्षणम्।
भर्तृहरिकृते वाक्यपदीये वर्णितस्य वाक्यविज्ञानस्य समीक्षणम्।
भर्तृहरिकृते वाक्यपदीये वर्णितस्य अर्थविज्ञानस्य समीक्षणम्।

**शोधविधिः (Research Methodology)–**

प्रकृतेऽस्मिन्नध्ययने वर्णनात्मकानुसन्धानान्तर्गतः वस्तुविश्लेषणप्रविधिः प्रयुक्तः।

**वाक्यपदीये भाषावैज्ञानिकतत्त्वानि–**

आचार्यभर्तृहरिविरचितं वाक्यपदीयं व्याकरणग्रन्थेष्वन्यतमं स्थानं भजते। वाक्यञ्च पदञ्च वाक्यपदे ते अधिकृत्य कृतो ग्रन्थो वाक्यपदीयमिति। इदञ्च वाक्यपदीयं ब्रह्म-पद-वाक्याख्येषु त्रिषु काण्डेषु विभक्तं वर्तते। व्याकरणशास्त्रस्य स्वतन्त्रदर्शनप्रतिपादित्वाद् वाक्यपदीयं तद्दार्शनिकग्रन्थोऽपि मन्यते। वाक्यपदीये भाषाविज्ञानसम्बन्धीनि नैकानि तत्त्वानि विवेचितानि वर्तन्ते यान्यद्यापि भाषाविज्ञानिनः भाषाध्ययने तद्विश्लेषणे च अत्यन्तमुपकुर्वन्ति।

भाषायाः लघुतम एककः ध्वनिर्भवति, अस्यैव ध्वनेः भाषाप्रयोगे प्रप्रथममुच्चारणं भवति। नैकैर्ध्वनिभिः पदम् (Word) निर्मीयते। पदैश्च वाक्यरचना भवति, वाक्याच्च अर्थस्याभिव्यक्तिर्भवति। अयमेव क्रमः भाषाप्रयोगे नैरन्तर्येण प्रवर्तते। एषु प्रत्येकं तत्त्वस्य विशिष्टाध्ययनाद् भाषाविज्ञानस्य चत्वारि प्रमुखाणि अङ्गानि विकसितानि। तद्यथा-ध्वनिविज्ञानम् (Phonology), पदविज्ञानम् (Morphology), वाक्यविज्ञानम् (Syntax) अर्थविज्ञानञ्च (Semantics)।

प्रकृतेऽस्मिन् शोधपत्रे भर्तृहरिकृते वाक्यपदीये वर्णितानि भाषाविज्ञानसम्बन्धीनि तत्त्वानि विश्लेष्यन्ते, तत्रापि विशिष्य वाक्यपदीयानुसारं भाषोत्पत्तिसिद्धान्तः, ध्वनिविज्ञानं, पदविज्ञानं, वाक्यविज्ञानम् अर्थविज्ञानञ्चेत्यादीनां विश्लेषणं प्रस्तूयते।

**वाक्यपदीयानुसारं भाषोत्पत्तिसिद्धान्तः–**

भाषाया उत्पत्तिः कथं जातेत्यस्मिन् विषये भाषाविज्ञानिषु न वर्तते मतैक्यम्। कैश्चिद् मन्यते यद् यदा परमात्मना सृष्टिरचना कृता तत्साकमेव भाषापि आविष्कृता, एषाञ्चायं सिद्धान्तः भाषायाः दिव्योत्पत्तिसिद्धान्तत्वेन प्रसिद्धः। एषु वैदिकैः संस्कृतं, बौद्धैः पालिभाषा, जैनैः प्राकृतं, क्रैस्तैः हिब्रू, यवनैश्च अरबी-प्रभृतयो भाषाः आदिभाषात्वेनाङ्गीकृताः। कालक्रमेण भाषोत्पत्तिविषये नैकैः भाषाशास्त्रिभिः यथामति

भाषाया विभिन्नाः सिद्धान्ताः प्रतिपादिताः। यथा-सङ्केतसिद्धान्तः, रणनसिद्धान्तः, ध्वन्यनुकरणसिद्धान्तः, आवेगसिद्धान्तः, श्रमध्वनिसिद्धान्तः, सम्पर्कसिद्धान्तः, प्रतीकसिद्धान्तः समन्वयसिद्धान्तश्चेत्यादयः।

वाक्यपदीये भाषायाः प्रतिभासिद्धान्तः स्वीकृतो वर्तते, तदनुसारं भाषायामेव विश्वस्य निबन्धनी शक्तिर्वर्तते, भाषा विश्वस्य नेत्ररूपा प्रतिभा च आत्मरूपा वर्तते।

**शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।**
**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते।।**[४]

वाक्यपदीयानुसारं प्रत्येकस्मिन् प्राणिनि प्रतिभा वर्तत एव। प्रतिभा मनुष्येषु जन्मतो भवति अपि च प्रतिभां विना मनुष्यस्य सत्तैव भवितुन्नार्हति। वस्तु किम्? ध्वनिः कः? कस्य वस्तुनः को गुणः? कस्य ध्वनेः कीदृशः प्रभावो भवति। इत्यादीनां निर्णयः प्रतिभाद्वारैव भवति। वाक्यपदीयानुसारं केवलं मानव एव न अपितु पशवोऽपि प्रतिभामेवाधारीकृत्य स्वीयानि कर्माणि सम्पादयन्ति। यथोक्तं भर्तृहरिणा-

**प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति।**
**समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशाद्।।**[५]

वाक्यपदीयानुसारं प्रतिभा प्रत्येकं प्राणिनि पृथक्-पृथग्रूपेण विद्यमाना भवति तथा आवश्यकतानुसारं विभिन्नपरिस्थितिषु सा परिस्फुटिता भवति। प्रतिभैव समग्रमपि मानवजीवनं सञ्चालयति आवश्यकतानुसारञ्च कार्यं कर्तुं प्रेरयति। वसन्तकाले कोकिलस्य कूजनम्, पक्षिभिर्नीडनिर्माणम्, ऊर्णनाभस्य जावनिर्माणं, वानरस्य कूर्दनादीनि कार्याण्यपि तत्तत्प्राणिषु विद्यमानविशिष्टप्रतिभाकारणादेव भवन्ति।

**यथा द्रव्यविशेषाणां परिपाकैरयन्त्रजाः।**
**मदादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा।।**
**स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः।**
**जन्त्वादयः कुलयाधिकरणे केन शिक्षिताः।।**
**आहारप्रीत्यभिद्वेष-प्लवनादिषु क्रियासु कः।**
**जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिक्षाम्।।**[६]

इयञ्च प्रतिभा संस्कारजन्या भवति। मानवस्य संस्काराः (भावनाः) प्रतिभोत्पत्तौ आधारत्वेन वर्तन्ते। इमे च संस्काराः इह जन्मनः पूर्वजन्मनोऽपि भवितुमर्हन्ति। यथोक्तं भर्तृहरिणा-

**भावनानुगतादेतदागमादेव जायते।**
**आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते।।**[७]

वाक्यपदीये प्रतिभायाः षड् भेदाः प्रतिपादिता वर्तन्ते। तद्यथा–स्वाभाविकी प्रतिभा (जन्मसिद्धा), चरणजन्या (तपसा साधनया च), अभ्यासजन्या, योगजन्या (यौगिक-क्रियाजन्या), अदृष्टजन्या (पूर्वसंस्कारजन्या), विशिष्टोपहिता (विशिष्टव्यक्तीनां परिस्थितीनाञ्च सम्पर्कात्) चेति।

**स्वभावचरणाभ्यासयोगादृष्टोपपादिताम्।**
**विशिष्टोपहितां चेति प्रतिभां षड्विधं विदुः।।**[८]

पुनरियं प्रतिभा द्विविधा भवति–भावयित्री कारयित्री च। भावयित्रीप्रतिभायाः कार्यं ज्ञानार्जनं चिन्तनं मननञ्च वर्तते। कारयित्रीप्रतिभायाश्च कार्यं भावानां क्रियात्मक-रूपप्रदानं वर्तते। तस्माद् भावयित्री प्रतिभा ज्ञानस्य भावपक्षः कारयित्री च कलापक्षो वर्तते। भाषोत्पत्त्यर्थम् इमौ द्वावपि पक्षौ अत्यन्तमनिवार्यौ वर्तेते।

**वाक्यपदीयानुसारं ध्वनिः–**

ध्वनिविज्ञानं भाषाशास्त्रस्य महत्त्वपूर्णमङ्गं वर्तते। आङ्ग्लभाषायामेतत्कृते Phonology तथा Phonetics इति शब्दद्वयं प्रचलितं वर्तते। ध्वनिविज्ञानं भाषायाः विभिन्नध्वनीनां सम्यग् ज्ञानं कारयति तदुच्चारणञ्च शिक्षयति। एतद्द्वारा ध्वनीनामुच्चारणसम्बन्धिनं पूर्णं भवति। भाषाप्रयोगे उच्चारणस्य वर्तते अत्यन्तं महत्त्वम्। अत उक्तं महाभाष्ये–

**एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति**[९] इति।

ध्वनिशिक्षाप्रसङ्गे भगवता पाणिनिना ध्वन्युत्पत्तिविषये स्वीयं मतं प्रस्तुतं यत्–

**आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।।**

**मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्।**
**सोदीर्णो मूर्धन्यभिहतो वक्त्रमापद्य मारुतः।**
**वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः।।**[१०]

भर्तृहरिणा ध्वन्युत्पत्तेरयमेव भावः प्रकारान्तरेण उपस्थापितः–

**अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते।।**

**स मनोभावमापद्य तेजसा पाकमागतः।**
**वायुमाविशति प्राणमथासौ समुदीर्यते।।**

**विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।**
**प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते।।**[११]

अर्थात् जीवात्मा सूक्ष्मवाग्रूपेण विद्यमानो भवति। स एव स्वीयस्वरूपाभिव्यक्तये शब्दरूपे परिवर्तितो भवति। सः शब्दः विचारत्वेन परिणितः शारीरिकतेजसा युक्तः सन् प्राणवायुमाविशति। तदनन्तरमूर्ध्वं गच्छन् स्वीयग्रन्थीन् विभज्य पृथक्-पृथक् ध्वनिरूपेषु परिवर्तितः सन् प्राणवायुः वर्णानभिव्यज्य तेषु वर्णेष्वेव लीनो भवति।

उपरितनोद्धरणद्वारा स्पष्टं भवति यत् मानसिकप्रत्ययः (विचारः) कथं ध्वनित्वेनाभिव्यक्तो भवति। भाषायाः प्रकटीकरणे मुख्यं कारणं चेतनातत्त्वम् आत्मा वर्तते। चेतनाऽपि बुद्धिं विना कार्यं कर्तुं सर्वथासमर्थैव वर्तते। अत एव बुद्ध्यभावे पशुपक्षिणः भाषां प्रयोक्तुमसमर्था भवन्ति। मानवे बुद्धिचेतनयोः समन्वयो विद्यते, तस्माद् विचाराभिव्यक्तौ समर्थो भवति। एतत्कृते प्रेरणातत्त्वस्य मनसोऽपि आवश्यकता भवति। मनः प्राणवायोः सहयोगाद् वाग्यन्त्रस्य नियमितसञ्चालनाद् ध्वनिमुत्पादयति। इत्थं ध्वन्युत्पत्तौ चत्वारि तत्त्वानि नितरामावश्यकानि भवन्ति। तानि च–मानसिकसम्प्रत्ययः (भावः, विचारः), वक्तुमिच्छा, प्राणवायुसहयोगः, वाग्यन्त्रस्य नियमितसञ्चालनम्।

**वाक्यपदीयानुसारं पदविज्ञानम्–**

भाषायाः सार्थकमङ्गं वाक्यं भवति। वाक्यमपि पदैः, पदञ्च वर्णैर्निमित्तं भवति। पदे विद्यमानस्य प्रत्येकं वर्णस्य कश्चन सार्थकोऽर्थो न हि भवति तथैव वाक्यप्रयोगं विना पदानामपि कश्चन सार्थकोऽर्थो न वर्तत इति। अयमेव भावः भर्तृहरिणा वाक्यपदीये समुदीरितः–

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा इव।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।**[१२]

वाक्ये विद्यमाननि पदानि विश्लेष्यन्ते यद् इदं कर्तृपदम्, इदञ्च कर्मपदम्, इदं क्रियापदमिति। इयमेव वाक्यविश्लेषणप्रक्रिया भर्तृहरिणा अपोद्धारः इति नाम्ना निरूपिता। अपोद्धारद्वारैव वाक्ये विद्यमानस्य प्रत्येकं पदस्यार्थो ज्ञाप्यते तत्प्रकृति-प्रत्ययादयश्च बोध्यन्ते। यथोक्तञ्च भर्तृहरिणा-

**यथा पदे विभज्यन्ते प्रकृति-प्रत्ययादयः।**
**अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते।।**[१३]

वाक्यपदीये भर्तृहरिणा पदविभागे प्राच्यानां मतोल्लेखः कृतो वर्तते यत् वार्ताक्षौदुम्ब-रायणाभ्यां भाषायाः नामाख्यातौ इति द्वावेव भेदौ स्वीकृतौ। कैश्चिच्च नामाख्यातोप-सर्गनिपातादयः चत्वारो भेदा अमन्यन्त। कैश्चिच्च पञ्चमं कर्मप्रवचनीयमित्यपि स्वीक्रियत इति। यथोक्तम्-

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा।**
**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्।।**[१४]

पदानां लिङ्गविषये वाक्यपदीयकारेण लिङ्गसमुद्देशे स्पष्टीकृतं यत् कस्यचिदपि पदस्य लिङ्गनिर्धारणं वक्तुः विवक्षाऽऽधारितं वर्तते।

**स्थितेषु त्रिषु लिङ्गेषु विवक्षानियमाश्रयः।**
**कस्यचिच्छब्दसंस्कारे व्यापारः क्वचिदिष्यते।।**[१५]

पदेषु वचनानां सङ्ख्याविषये वाक्यपदीये निरूपितं यद् वस्तुनोः भेदाभेदकारणं सङ्ख्यैव वर्तते। अपि च एकत्वमिति सङ्ख्यैव द्वित्वादीनां कारणं भवति , तेन विना अन्यासां सङ्ख्यानां सम्भवो न भवति।

**भेदाभेदविभागो हि लोके सङ्ख्यानिबन्धनः।**
**द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वका यतः।**
**विना तेन न सङ्ख्यानामन्यासामस्ति सम्भवः।।**[१६]

कारकविषयेऽपि भर्तृहरिणोक्तं यत् क्रिया साध्यं कारकञ्च साधनं वर्तते एवं क्रियासिद्धत्वात् तत्साधनं कारकमुच्यते।

**गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते।**
**साध्यत्वेन निमित्तानि क्रियापदमपेक्षते।।**[१७]

**वाक्यपदीयानुसारं वाक्यविज्ञानम्–**

यत्र वाक्यसंरचनायाः, वाक्यप्रकाराणां, वाक्येषु परिवर्तनानां, वाक्यपदविन्यासस्य वाक्यानाञ्च विश्लेषणं भवति तद्वाक्यविज्ञानं कथ्यते। इत्थं वाक्यविज्ञाने वाक्यसम्बद्धानि सर्वाणि तत्त्वानि विश्लेष्यन्ते। पदविज्ञाने पदानां संरचना विश्लेष्यते। अतस्तस्मिन् पदसम्बपद्धानां संज्ञा-क्रिया-विशेषण-कारक-विभक्तिवचनलिङ्गादीनां विवेचनं क्रियते, किन्तु वाक्यविज्ञाने पूर्वोक्तक्रमेण निर्मितानि पदानि कुत्र कथञ्च प्रयुज्यन्ते, तानि कथं सार्थकार्थप्रतिपत्तये व्यवस्थाप्यन्ते इत्यादीनां विवेचनं भवति।

तात्त्विकदृष्ट्या ध्वनि-पद-वाक्येषु मौलिकभेदः वर्तत एव। ध्वनिः मूलतः उच्चारणसम्बद्धो भवति यश्च शारीरिकव्यापारादुत्पद्यते। पदे ध्वनेः सार्थकतायाश्च द्वयोः समन्वयो भवति। ध्वनिः शारीरिकपक्षः सार्थकता च मानसिकपक्षो वर्तते। एतद्द्वयोः समन्वयात् पदं वाक्ये प्रयोक्तुमर्हं भवति। वाक्ये विचारः, विचाराणां समन्वयः, सार्थकसमन्वितरूपेणाभिव्यक्तिः, चिन्तनादीनि तत्त्वानि विद्यन्ते। विचाराणां पूर्णाभिव्यक्तिः वाक्यादेव सम्भवति। अतो वाक्यमेव भाषायाः सार्थकः लघुतम एकको वर्तते। इदमेव मतं समर्थयन् वाक्यपदीयकारः भर्तृहरिः कथयति यत् पदेषु वर्णानां स्वतन्त्रसत्ता न भवति, न च वर्णेषु अवयवानाम्, वाक्याद् भिन्ना कस्यचिदपि स्वतन्त्र-सत्ता न विद्यते–

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा इव।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।**[१८]

भर्तृहरिणा वाक्यं परिभाषयता उक्तं यत्–

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।**
**कर्मप्रधानं गुणवदेकार्थं वाक्यमिष्यते।।**[१९]

अर्थाद् एकार्थनिरूपकं गुणवत् कर्मप्रधानं पदसमूहं वाक्यमिति। वाक्यावस्थायाम् अस्य पदानि पदान्तराकाङ्क्षां न कथयन्ति। विभागे च पदान्तरमपेक्ष्यन्ते।

वाक्यपदीयस्य द्वितीयकाण्डे भर्तृहरिणा वाक्यविषये अष्टौ मतानि प्रतिपादितानि। तद्यथा–क्रियापदं, क्रियायुक्तकारकादिसमूहः, क्रियाकारकादिसमूहे विद्यमाना जातिः, क्रियादिसमूहगतोऽखण्डः शब्दः, क्रियादिपदानां क्रमविशेषः, क्रियादीनां बुद्धिगतसमन्वयः, साकाङ्क्षप्रथमपदं साकाङ्क्षञ्च पृथक्-पृथक् प्रत्येकं पदञ्चेत्यादयः क्रमशः वाक्यत्वं प्राप्नुवन्ति।

**आख्यातशब्दः संघातो जातिः संघातवर्तिनी।**
**एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहतिः।।**
**पदमाद्यं पृथक् सर्वपदं साकाङ्क्षमित्यपि।**
**वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्।।**[२०]

**वाक्यपदीयानुसारम् अर्थविज्ञानम्–**

अर्थः भाषायाः आत्मरूपो वर्तते। यथा शरीरज्ञानात्परम् आत्मनः ज्ञानमपेक्षितं भवति तद्वद् भाषायाः शरीरावयवभूतानां ध्वनि-पद-वाक्यानां ज्ञानात्परं तदात्मभूत-तत्त्वस्यार्थस्यापि ज्ञानमपेक्षितमनिवार्यञ्च वर्तते। अर्थस्य महत्त्वं प्रतिपादयन् महाभाष्यकारो निगदति यद् अर्थज्ञानं विना यः किञ्चिदधीते तदध्ययनं ज्ञानज्योतिः प्रकाशयितुं सर्वथा असमर्थं भवति। यथा अग्निरहिते स्थाने स्थापितं शुष्केन्धनं तज्ज्वालयितुं समर्थं न भवति–

**यदधीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्केन्धै न तज्ज्वलति कर्हिचित्।।**[२१]

भर्तृहरिणा वाक्यपदीयेऽर्थं परिभाषयित्रा उक्तं यत्–

**यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते।**
**तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम्।।**[२२]

अर्थात् शब्दद्वारा यस्यार्थस्य प्रतीतिर्भवति स एवार्थः कथ्यते एतदतिरिच्यार्थस्यान्यद् लक्षणं न विद्यते। अनेन स्पष्टं भवति यदर्थस्य सामान्यं लक्षणं प्रतीतिर्वर्तते। भाषाशास्त्रीय-दृष्ट्या शब्दार्थौ मिथः अन्योन्याश्रितौ वर्तेते। शब्दः शरीरम्, अर्थश्चात्मा वर्तते। अर्थं विना शब्दः निर्जीवः तथैव शब्दं विना अर्थोऽपि निष्प्रयोज्यो भवति। शब्दः भाषाया

मूर्तरूपम्, अर्थस्य तच्चेतनतामावहति। अतः सार्थकप्रयोगाय उभयोः शब्दार्थयोः समन्वितरूपेणोपस्थितिः अनिवार्या वर्तते। अत एव भर्तृहरिणा वाक्यपदीये शब्दार्थौ एकस्यैव तत्त्वस्याभिन्नावयवौ मतौ–

**एकस्यैवात्मनो भेदौ शब्दार्थावपृथक् स्थितौ।।**[२३]

भर्तृहरिणा शब्दार्थयोः वाचकवाच्यसम्बन्धोऽमन्यत, अपि च अभिधाशक्तौ एव लक्षणाव्यञ्जनयोरपि अन्तर्भावोऽमन्यत–

**अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते।**
**योगः शब्दार्थयोस्तत्त्वमप्यतो व्यपदिश्यते।।**[२४]

भर्तृहरिणोक्तं यत् केवलं शब्दाः सत्तामात्रकारणाद् अर्थबोधका न भवन्ति अपि च यावत् शब्दाः श्रोत्रेन्द्रियस्य मनसो वा विषया न भवन्ति तावद् अर्थबोधने सर्वथा असमर्था हि भवन्ति–

**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रतीयते।**
**न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः।।**[२५]

समानार्थकानां नानार्थकानाञ्च शब्दानां कथमर्थनिर्णयो भवतीति विषये भर्तृहरिणा उक्तं यत् समानार्थकानां नानार्थकानाञ्च शब्दानां निर्णयः प्रयोक्तुः आधारेण भवति। प्रयोक्ता शब्दं यस्मिन्नर्थे प्रयोक्तुमिच्छति स एवार्थोऽभिधेयो भवति–

**बहुष्वेकाभिधानेषु सर्वेष्वेकार्थकारिषु।**
**यत् प्रयोक्ताऽभिसन्धत्ते शब्दस्तत्रवतिष्ठते।।**[२६]

नानार्थकानां शब्दानामर्थनिर्णयस्य भर्तृहरिणा चतुर्दश साधनानि प्रोक्तानि। तद्यथा–

**संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।**[२७]

**निष्कर्षः** (Conclusions)–

भर्तृहरिकृते वाक्यपदीये भाषावैज्ञानिकतत्त्वानां परिशीलनमधिकृत्य प्रवृत्तस्यास्य शोधपत्रस्य निम्नलिखिता निष्कर्षा प्रस्तूयन्ते–

◦ भर्तृहरिकृते वाक्यपदीये भाषोत्पत्तिसिद्धान्तः, ध्वनिविमर्शः, पदविमर्शः, वाक्यविमर्शः, अर्थविमर्शश्चेत्यादीनि नैकानि भाषावैज्ञानिकतत्त्वानि विवेचितानि वर्तन्ते।

◦ भर्तृहरिकृते वाक्यपदीये भाषोत्पत्तेः प्रतिभासिद्धान्तः प्रतिपादितो वर्तते। तथा प्रतिभा एव भाषायाः आधारत्वेन स्वीकृता वर्तते।

० भर्तृहरिकृते वाक्यपदीये ध्वने: वैज्ञानिक: विमर्श: प्रस्तुतो वर्तते तथा ध्वने: उत्पत्तौ भाव: उत विचार:, विवक्षा, प्राणवायुसहयोग:, वाग्यन्त्रस्य सञ्चालनञ्चेत्यादीनि चत्वारि तत्त्वानि आवश्यकानि मतानि।

० भर्तृहरिकृते वाक्यपदीये पदविज्ञानस्य विस्तृतं विवेचनं वर्तते। अपि च पदसम्बन्धिनां वचन-कारक-लिङ्गप्रभृतीनामपि विशदं विवेचनं कृतमस्ति।

० भर्तृहरिकृते वाक्यपदीये वाक्यविज्ञानस्य नैकानि तत्त्वानि विवेचितानि वर्तन्ते। अपि च आख्यातशब्दजातिसंघातभेदेन वाक्यमष्टधा परिभाषितम्।

० भर्तृहरिकृते वाक्यपदीये अर्थविज्ञानस्य विस्तृतो विमर्श: प्रस्तुतो वर्तते। तथा शब्दार्थौ एकस्यैव तत्त्वस्याभिन्नावयवौ मतौ। अपि च नानार्थकशब्दानामर्थनिर्णयाय संयोगादीनि चतुर्दश साधनानि वर्णितानि।

इत्थं प्रकृतेऽस्मिन् शोधपत्रे वाक्यपदीये निरूपितानि भाषावैज्ञानिकतत्त्वान्येव विवेचितानि। तत्रापि विशिष्य शोधपत्रेऽस्मिन् वाक्यपदीये निरूपित: भाषोत्पत्तिसिद्धान्त:, ध्वनिविज्ञानं, पदविज्ञानं, वाक्यविज्ञानम् अर्थविज्ञानञ्चेत्यादीनां विवेचनं विश्लेषणञ्च कृतं वर्तते। तेषां विवेचनात् निष्कर्षोऽयमवाप्त: यद् वाक्यपदीये आचार्येण भर्तृहरिणा भाषाविज्ञानसम्बन्धीनि नैकानि तत्त्वानि विवेचितानि वर्तन्ते यानि च अद्यापि भाषाशास्त्रिण: अत्यन्तमुपकुर्वन्ति।

**सन्दर्भा:–**

१. काव्यादर्श:-१.४
२. वाक्यपदीयम्-१.१२४
३. वाक्यपदीयम्-१.१२३
४. वाक्यपदीयम्-१.११८
५. तत्रैव २.१४७
६. तत्रैव २.१४८-१५०
७. तत्रैव २.१५१
८. तत्रैव २.१५२
९. महाभाष्यम् प्रदीपटीका-आ-१
१०. पाणिनीयशिक्षा ६-९
११. वाक्यपदीयम्, १. ११२-११५
१२. वाक्यपदीयम्-१.७३
१३. तत्रैव-२.१०
१४. तत्रैव-३.१
१५. तत्रैव-लिङ्गसमुद्देश:-१९

१६. तत्रैव-३.१,१५
१७. वाक्यपदीयम्–२-४९
१८. वाक्यपदीयम्-१-७३
१९. वाक्यपदीयम्-२.४
२०. वाक्यपदीयम्-२.१-२
२१. महाभाष्यम्-आ.१
२२. वाक्यपदीयम्-२.३२८
२३. तत्रैव २.३१
२४. तत्रैव-३.३
२५. तत्रैव–१.५६
२६. तत्रैव–२.४०२
२७. तत्रैव-२.३१७-३१८

**सन्दर्भग्रन्थसूची–**


१. दास, श्यामसुन्दर. भाषाविज्ञान, जयपुर, अनु प्रकाशन , २००८.

२. कुमार, प्रमोद. विचार और भाषा, नई दिल्ली, ग्रन्थ शिल्पी प्रकाशन, २००७.

३. जोशी, हेमचन्द्र. भाषावैज्ञानिक सम्बन्ध, लखनऊ, रमाप्रकाशन, १९७७.

४. अय्यर, के.ए. सुब्रह्मण्यम्. भर्तृहरि, जयपुर, हिन्दी ग्रन्थ अकादमी, १९९१.

५. तिवारी, भोलानाथ. शब्द विज्ञान, दिल्ली, शब्दकार प्रकाशन, १९८२.

६. तिवारी, भोलानाथ. भाषाविज्ञान, ५७ तम संस्करण, इलाहाबाद, किताब महल प्रकाशन, २०१४.

७. द्विवेदी, कपिलदेव. भाषाविज्ञान एवं भाषा शास्त्र, त्रयोदश संस्करण. वाराणसी, विश्वविद्यालय प्रकाशन, २०१२.

८. तिवारी, हरिनारायण, वाक्यपदीयम् वाराणसी, चौखम्भा प्रकाशन, १९९६.

९. व्यास, भोलानाथ. संस्कृत का भाषा शास्त्रीय अध्ययन, वाराणसी, वि.वि. प्रकाशन, १९९१.



सहायकाचार्यः (शिक्षाशास्त्रम्, संविदा)
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.)
भोपालपरिसरः, भोपालम्




# 10

## रूपावतारस्थ-समासावतारस्य प्रयोगानुशीलनम्

-सन्तोषकुमारः

व्याकरणशास्त्रस्य मुख्यं प्रयोजनं तावत्तत्तच्छब्दानां साधुत्वनिर्वचनम्। तच्च साधुत्वं स्वरूपदृष्ट्या अर्थदृष्ट्या च भवति। समासे शब्दस्वरूपदृष्ट्या लघ्वीकरणं स्वरूपसाधुत्वञ्च भवति, अर्थदृष्ट्या चैकं विशिष्टम् अर्थं द्योतयति। अत एव व्याकरणशास्त्रस्य द्विधा ग्रन्थाः सन्ति–प्रक्रियाग्रन्थाः अर्थग्रन्थाश्च। तत्रार्थग्रन्थेषु वैयाकरणभूषणसारमञ्जूषा-प्रभृतयः नैके प्रमुखाः ग्रन्थाः वर्तन्ते। तेषु ग्रन्थेषु धात्वर्थतिङर्थस्फोटसमासशक्तीत्यादि-विषये ग्रन्थकारैः विस्तरेण निरूपितम्।

तथा च प्रक्रियाग्रन्थेषु रूपमाला-रूपावतार-प्रक्रियाकौमुदीवैयाकरणसिद्धान्त-कौमुद्यादयो नैके ग्रन्थाः वर्तन्ते। एतेष्वेव 'रूपावतार'-समाख्यः प्रक्रियाग्रन्थोऽपि प्रसिद्धतमो ग्रन्थः वर्तते। अयञ्च ग्रन्थः शाब्दीप्रक्रियां सुखेन प्रपित्सूनां विद्यार्थिनामुपकृतये सौगतमतानुयायिना आचार्येण धर्मकीर्तिमहोदयेन प्रणीतः। ऊहितमपि ग्रन्थकारेण मङ्गलपद्ये-

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।**

**सर्वज्ञमनन्तगुणं प्रणम्य बालप्रबोधनार्थमिदम्।**
**रूपावतारमल्पं सुकलापमृजुं करिष्यामि।।**[1]

**पुष्पिकायाञ्च-**

**''इति धर्मकीर्तिविरचिते रूपावतारे कृदन्तावतारस्समाप्तः।''**[2]

सुललितपदगुम्फितभागद्वयात्मकोऽयं ग्रन्थो वर्तते। अस्य व्याकरणग्रन्थस्य पूर्वभागोऽवताराष्टकपरिमितेषु विभक्तः। द्वितीयभागश्च धातुप्रत्ययपञ्जिकासमाख्यः 'सार्वधातुकार्धाधातुककृदन्त" इति परिच्छेदत्रयपरिमितघटितो वर्तते।

पूर्वभागे संज्ञा-संहिता-विभक्ती-अव्यय-स्त्रीप्रत्यय-कारक-समास-तद्धितावकाराः सन्ति। तेष्वन्यतमस्समासावतारो वर्तते। अस्मिन् समासावतारे समासस्य किं लक्षणम्? तस्य किं प्रयोजनम्? समस्तपदानां कथं सिद्धिः? एवञ्च समस्तपदघटकपदानां कथं वाक्यप्रयोगः? इत्यादिविषये प्रकरणेऽस्मिन् चर्चा चर्चिता। तदित्थम्-

समुपसर्गपूर्वकात् सत्तार्थकाद् अस-भुविधातोः समसनमिति व्युत्पत्तौ "भावे" इत्यनेन भावार्थे, समस्यन्तेऽनेकपदानीति व्युत्पत्तौ "अकर्त्तरि च कारके संज्ञायाम्" इत्यनेन कर्मणि, समस्यते अस्मिन्निति व्युत्पत्तौ "हलश्च" इत्यनेनाधिकरणे, कर्तरि बाहुलकाद् वा घञ्-प्रत्यये सति समासपदं निष्पद्यते। इह भावघञन्तपक्षं प्रक्रियाकौमुदीकारः, सिद्धान्तकौमुदीकारः, न्यासकारः, श्लोकसिद्धान्तकौमुदीकारश्च। कर्मघञन्तपक्षञ्च तत्त्व-बोधिनीकारः, बालमनोरमाकारः तथा च अधिकरणघञन्तपक्षं पदमञ्जरीकारः, कर्तरिघञन्तपक्षं बालमनोरमाकाराश्च समर्थयन्ति।

अयं समासशब्दः वाचस्पत्यकोशे संक्षेपे, समर्थने, समाहारे, व्याकरणोक्ते द्व्यादिपदानामेकपदतासम्पादके पदसाधुतार्थके, संस्कारभेदे च[३], मेदिनीकोशे समर्थने, हलायुधकोशे समाहारे, हैमचन्द्रकोशे ऐकपद्ये, शब्दकल्पद्रुमकोशे समसनं पदयोः पदानां वा एकपदीकरणऽर्थे कथितः।[४] मनुनाऽपि समासशब्दः संक्षेपार्थे प्रयुक्तः मनुस्मृत्याम्-

**सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम्।**
**स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम्।।**[५]

शब्दशास्त्रे चायं समासशब्दः पारिभाषिकेऽर्थ उपलभ्यते। स च पदयोः पदानां एकपदीभवनं समास इति समान्याभिधानं वर्तते। एकपदीभवनेऽपि बहूनि प्रयोजनानि प्रतिपादितानि आचार्यैः। तानीमानि सन्ति-उपसर्जनसिद्धिः, समासान्तः, विकारादेशः, विभक्तिलोपालोपौ, पुंवद्भावः, लिङ्गविधिः, वचनविधिः, स्वरविधिश्च। तेषु बौद्धभिक्षुप्रणीत-रूपावतारस्थसमासावतारे त्रीण्येव प्रयोजनानि उक्तानि सन्ति। तानि चेमानि-

**समासस्य त्रीणि प्रयोजनानि**
**ऐकपद्यमैकस्वर्यमेकविभक्तित्वञ्च।"**[६]

ग्रन्थेऽस्मिन् बौद्धाचार्येण धर्मकीर्तिमहोदयेन समस्तप्रयोगाणां परिष्कृता शैली, लौकिकालौकिकव्युत्पत्तिः, वाक्यप्रयोगः प्रदत्तः। यथा-''उपकुम्भ इति स्थिते उपशब्दात् समीपवाचिनः प्रथमैकवचनम्-सु, कुम्भशब्दात् षष्ठी। अविग्रहोऽयं नित्यसमासः। अस्वपदेन विग्रहो वा-इति कुम्भस्य समीपं विगृह्यते। उपकुम्भं तिष्ठति कुम्भस्य समीपे तिष्ठतीत्यर्थः''। तथैव द्वितीयैकवचनस्याम्भावः-''उपकुम्भं पश्य''। अकारान्ता-दव्ययीभावसमासादुत्तरयोः तृतीयासप्तम्योर्बहुलमम्भावो भवति तदुदाहरणानि इमानि सन्ति-''उपकुम्भं कृतम्, उपकुम्भेन कृतम् उपकुम्भं निधेहि, उपकुम्भे निधेहि''। पञ्चम्यास्तु-''उपकुम्भात् आनय''।[७]

शब्दप्रादुर्भावस्योदाहरणं भट्टोजिदीक्षितेन इतिहरि प्रदत्तम् तथा च धर्मकीर्तिना इति पाणिनि-प्रयोगः दत्तः। उल्लिखितञ्च ''शब्दप्रादुर्भावः प्रकाशता-शब्दस्य, तस्मिन्निति पाणिनिः। पाणिनिशब्दो लोके प्रकाशते इत्यर्थः।''[८]

साकल्य-सादृश्य-यौगपद्य-समाप्ति-समृद्धि-सम्पत्त्याद्यर्थेषु सहशब्देन अव्ययीभावः

समासो भवति। सहस्य सभाव एष्वर्थेषु भवति इत्यस्मिन् विषये ग्रन्थकार: एकं पद्यं प्रस्तुतवान्।

तदित्थम्–

**सह-साकल्य-सादृश्य-यौगपद्य-समाप्तिषु।**
**समृद्धौ चापि सम्पत्तौ सहशब्दः प्रकीर्तितः।।**[९]

सादृश्ये–हरे: सादृश्यं सहरि:। अत्र वक्ष्यमाणप्रकारेण सहशब्दस्य सभावो द्रष्टव्य:। यौगपद्यमेककालता, चक्रेण एककाले इति विग्रहे तदर्थक-सहशब्दस्य समासेन सहचक्र इति जाते सहस्य सभाव:, सचक्रम् सादृश्यं तुल्यता, यथाशब्दार्थत्वेनैव सिद्धे पुन: सादृश्यग्रहणं सादृश्यवत: धर्मिण: प्राधान्याय, सदृश: सख्या ससखि। सम्पत्ति: अनुरूप आत्मभाव: समृद्धेरन्य:, अनुरूपो ब्रह्मभाव: सब्रह्म बाभ्रवाणाम्। साकल्यमशेषता, तस्मिन्–तृणमप्यपरित्यज्य सतृणं भुङ्क्ते। अन्तवचने–अन्त इति परिग्रहापेक्षया समाप्ति-रुच्यते, पशुबन्धन्तमधीते इति पशुबन्धम्।

''मध्यार्थकाव्ययस्य योगविभक्तेन अव्ययम्'' इत्यनेन दिशाशब्देन सह समासो भवति। वैयाकरणसिद्धन्तकौमुद्यां भट्टोजीदीक्षितेन योगविभागस्योदाहरणं दिशयोर्मध्येऽपदिशम् इति प्रदर्शितम्, परन्तु धर्मकीर्तिना मध्यार्थकान्तरव्ययस्योदहरणानि अन्तर्जालम्, अन्तर्वर्णम् अन्तर्गिरम्, अन्तर्गिरि प्रस्तुतानि। अत्र केषाञ्चिदाचार्याणां मते स्वमते च मध्यार्थे अन्तरव्ययस्य समासो भवति। तथा अन्याचार्याणां मते विभक्त्यर्थे समासो भवतीति इदमुपस्थापितं ग्रन्थकारेण। तदित्थम्–

''अव्ययम् इति योगविभागेन अर्थान्तरेऽपि समासो भवति। इति मध्यार्थे अव्ययस्य समास: इति केचित्, विभक्त्यर्थत्वादेव सिद्ध्यति इत्यन्ये, जलस्य मध्ये अन्तर्जलम्। अन्तर्वणम्। मध्यार्थकान्तस्य गिरिशब्देन समासे .......अन्तर्गिरम्, अन्तर्गिरि।''[१०]

न अश्व: अनश्व: इत्यत्र नञ्घटिताजाद्युत्तरदे परत: नञे नकारस्य लोप: नुडागमश्च नञ्समासे भवति। न एके नैके इत्यादिस्थलेषु सुप्सुपा समासो भवति। यदि अत्रापि नञ्समासो स्वीक्रियते, चेत्तर्हि नकारलोप: नुडागमश्चापत्ति: स्यात्। एतदर्थम् ग्रन्थकारेण धर्मकीर्तिना स्पष्टप्रतिपत्त्यर्थं वचनमुद्धृतम्–''नकनान्तरीयकनाराचादिषु नशब्देन सुप्सुपेति समास:''।[११]

बहुपदबहुव्रीहे: उदाहरणमेकं प्रदत्तं ग्रन्थकारेण धर्मकीर्तिना। तदित्थम्–चित्रविविधपुष्प-फलतरुवनोपशोभितोद्यानभूमिनगरमित्यत्र बहुपदबहुव्रीहि:। यथा–चित्राणि च तानि विविधानि चेति विशेषणसमास:, पुष्पाणि च फलानि चेति चार्थे द्वन्द्व:, तरुणां वनं तरुवनमिति षष्ठीसमास:, चित्राणि विविधानि पुष्फलानि येषामिति बहुव्रीहि:, चित्रविविधपुष्पफलानि च तानि तरुवनानि चेति पुनर्विशेषणसमास:, उपशोभितेति गतिसमास:, चित्रविविधपुष्पफल-

तरुवनैरुपशोभितेति तृतीयासमासः, उद्यानस्य भूमिः इति षष्ठीसमासः, चित्रविविधपुष्फलतरु-वनशोभिता उद्यानभूमिर्यस्मिन्नगरे तत् चित्राविविधपुष्फलतरुवनोपशोभितोद्यानभूमि, इति बहुपदबहुब्रीहिः।[१२]

समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः सन्ति। एकस्मिन् क्रियापदे आवृत्ते एकस्य असमस्यमानपदस्य प्रथममन्वयः, तदनन्तरमन्यस्यान्वयो यत्र तत्र समुच्चयः अर्थः भवति। यथा–ईश्वरं गुरुं च भजस्व। अत्र चशब्दयोगाद् गुरोः ईश्वरसापेक्षत्वम्, न त्वीश्वरस्य सापेक्षत्वम्, तस्य चकारयोगाभावात्। अत एवात्र एक एव च-शब्दः प्रयुज्यते। धर्मकीर्तिरपि वदति–"परस्परनिरपेक्षाणां पदार्थानामेकस्मिन् अन्वयः समुच्चयः।[१३] यत्रान्यतरस्य पदस्यैकस्मिन् क्रियापदे आनुषङ्गिकत्वेन परार्थप्रवृत्तिविषयत्वेनान्वयः, इतरस्य तु पदस्यान्यस्मिन् क्रियापदे उद्देश्यत्वेनान्वयश्च तत्रान्वाचयश्चार्थः भवति। यथा भिक्षामट गां चानय इति। कथयति ग्रन्थकारः–"यत्रैकस्य प्राधान्यमितरत्तदनुरोधेन सम्बध्यते सोऽन्वाचयः।"[१४] एतयोः समुच्चयान्वाचययोश्चार्थयोः द्वन्द्वो न भवति।

परस्परापेक्षितानां समुदितानामेकस्मिन् क्रियापदेऽन्वयो यत्र, तत्रेतरेतरयोगः परस्परसाहित्यं चार्थः भवति। यथा–धवश्च खदिरश्च इति धवखदिरौ। परस्परसाहित्यसूचनाय चकारद्वयप्रयोगः। यथा च लिखति धर्मकीर्तिः स्वग्रन्थे–"एकस्यां क्रियायामनेकेषां पदार्थानामन्योन्यापेक्षाकारकत्वमितरेतरयोगः।"[१५] परस्परसाहित्यं समाहारः भवति। समूहो विशेष्यम्। यथा–संज्ञापरिभाषयोः समूहः संज्ञापरिभाषमिति। तद्यथा–भणति धर्मकीर्तिः रूपमालायाम्–"संहतिस्समाहारः। इतरेतरयोगे समाहारे च समासो विधीयते। समाहारः परस्परानुप्रवेशादनधिगतावयवभेदानामुपसर्जनीभूतावयवसङ्घातः।

**इतरेतरयोगस्तु भिन्नसङ्घाभिधायिनाम्।**
**प्रत्येकञ्च समूहोऽसौ समूहिषु समाप्यते।।"**[१६]

अनेन प्रकारेण कथयितुं शक्यते यत् सौगतमतानुयायिधर्मकीर्तिमहोदयेन रूपमालाख्ये ग्रन्थे प्रयोगाणां विस्तृतं विवेचनं कृतम्। एवञ्च मयाऽत्र तान्येवोदाहरणानि प्रदत्तानि यानि वैयाकरणसिद्धान्तकौमुद्यां न दत्तानि भट्टोजिदीक्षितेन।

**सन्दर्भाः–**


१. रूपावतारः, प्रथमो भागः, पृ.सं.–१, प्रकाशकः-जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

२. रूपावतारः, द्वितीयो भागः, पृ.सं.–३०६, प्रकाशकः-जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

३. वाचस्पत्यम्, षष्ठो भागः, पृ.सं.-५२३२, प्रकाशितः–१९६२ ई., प्रकाशकः– चौखम्भासंस्कृतसीरीज-आफिस, वाराणसी

४. समर्थनं मेदिनी। समाहारः हलायुधः। ऐकपद्यमिति हैमचन्द्रः। समसनं पदयोः पदानां वा एकपदीकरणं समासः। शब्दकल्पद्रुमः, पञ्चमो भागः, पृ.सं.–२७४, तृतीयसंस्करणम्–२०२४ वि. प्रकाशकः–चौखम्भा संस्कृत सीरीज–आफिस, वाराणसी

५. मनुस्मृति ७/२२२

६. रूपावतारः, प्रथमो भागः, पृ.सं.–१६६, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

७. रूपावतारः, प्रथमो भागः, पृ.सं.–१६६, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

८. रूपावतारः, प्रथमो भागः, पृ.सं.–१६६, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

०९. रूपावतारः, प्रथमो भागः, पृ.सं.–१६८, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

१०. रूपावतारः, प्रथमो भागः, पृ.सं.–१६९, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

११. रूपावतारः, प्रथमो भागः, पृ.सं.–१८०, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

१२. रूपावतारः, प्रथमो भागः, पृ.सं.–१८६, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

१३. रूपावतारः, प्रथमो भागः, पृ.सं.–१८७, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

१४. रूपावतारः, प्रथमो भागः, पृ.सं.–१८७, प्रकाशकः–जी. ए. नेटसन एण्ड क. एस्पलेनैड, मद्रास

१५. रूपावतारः, प्रथमो भागः, पृ.सं.–१८७, प्रकाशकः–जी. ए. नेटसन एण्ड क . एस्पलेनैड, मद्रास

१६. रूपावतारः, प्रथमो भागः, पृ.सं.–१८७, प्रकाशकः–जी. ए. नेटसन एण्ड क . एस्पलेनैड, मद्रास

राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.)
गङ्गानाथझापरिसरः, प्रयागः



# 14

# भर्तृहरेः वाक्यपदीये शब्दब्रह्म-स्वरूपम्

– **बालकृष्णसेमवालः**

संस्कृते व्याकरणस्य परम्परा प्राचीनतमाऽस्ति। भाषायाः शुद्धस्वरूप-ज्ञानाय व्याकरणशास्त्रमतीव प्रमुखं भवति। व्याकरणं विना भाषायाः शुद्धप्रयोगं न भवितुमर्हति। यदा काऽपि भाषा व्यवहारातीततां प्रयाति तदा तस्याः भाषायाः ज्ञानं व्याकरणान्तरेण सर्वात्मना कुरुते। वेदस्य संरक्षणायापि व्याकरणस्य महती आवश्यकता विद्यते। अत एव षड्वेदाङ्गेष्वपि व्याकरणस्य सर्वोपरि स्थानं विद्यते। पाणिनिशिक्षायामपि उक्तं यथा–

**'मुखं व्याकरणं स्मृतम्'** इति।

महर्षिणा पतञ्जलिना महाभाष्ये व्याकरणशब्दानुशासनस्य पञ्च प्रयोजनानि उक्तानि। तद्यथा–रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्। भाषायाः शुद्धये व्याकरणस्य अपेक्षा भवत्येव। न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुमीशः। तन्महिम्नि बुधैरभिहितमिदम्। यथा–

**यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो मा भूत्, सकलं शकलं सकृच्छकृतम्।**

व्याकरणानि बहुभिर्वैयाकरणैर्महर्षिभिः प्रणीतानि। तेषु व्याकरण–कर्तृषु विद्वत्सत्तमेषु– इन्द्रः, चन्द्रः, काशकृश्त्स्नः, आपिशलि, शाकटायनः पाणिनि, जैनेन्द्रः इत्येतेऽष्टौ सन्ति। तद्यथा–

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा, जयन्त्यष्टादिशाब्दिकाः।।**

एषु सर्वेषु पाणिनिव्याकरणं महत्त्वपूर्णं प्रसिद्धिञ्च विद्यते। आधुनिकव्याकरणे एतेषां महदावश्यकता प्रतीयते। व्याकरणशास्त्रस्य उपरि अनेके ग्रन्थाः निर्मिताः सन्ति। तेषु एकः अन्यतमः ग्रन्थः भर्तृहरिकृतं वाक्यपदीमस्ति। व्याकरणशास्त्रे अस्य महती ख्यातिरस्ति। अस्य अपर नाम त्रिकाण्डी विद्यते। व्याकरणस्य दार्शनिकस्वरूपमस्मिन् विद्यते। अस्य कर्ता नीतिशतकस्य कविः भर्तृहरिः महावैयाकरणः अस्ति। अस्य गुरुः वशुरातः आसीत्। भर्तृहरिरचिते वाक्यपदीये भाषायाः प्रकृतिः तथा तस्याः बाह्यलोकेन

सह सम्बन्धविषये स्वविचाराः प्रकटिता। अयं ग्रन्थः त्रिषु विभागेषु विभक्तः वर्त्तते। पुनः सम्पूर्णोऽपि ग्रन्थः पद्येषु निबद्धः वर्त्तते। प्रथमकाण्डस्य नाम ब्रह्मकाण्डः वर्तते। यस्मिन् १५७ कारिकाः निहिताः सन्ति। द्वितीयकाण्डः वाक्यकाण्डेति नाम्ना ज्ञायते, यस्मिन् ४९३ कारिकाः सन्ति। तृतीयः काण्डः पदकाण्डनाम्ना ज्ञायते। प्रथमकाण्डे शब्दब्रह्मस्वरूपं भर्तृहरिणा प्रतिपादितमस्ति-'ब्रह्मप्राप्ते साधनभूतोऽपि शब्द एव दृष्टिपथे आयाति।'

साम्प्रतं वाक्यपदीयानुसारं शब्दब्रह्मस्य विवेचनं क्रियते-जगति व्याकरणशास्त्रस्य प्रसिद्धिः क्लिष्टशास्त्ररूपेण वर्तते। वहवः व्याकरणशास्त्रस्य नामैव श्रुत्वा भीतिं जनयन्ति। किन्तु व्याकरणशास्त्रे केवलं शब्दानां व्युत्पतिविषये ज्ञानमेव नास्ति अपितु दर्शनस्य साहित्यस्य च स्वरूपमपि विदुषां पुरस्ताद् उपस्थितं भवति। बौद्धवैयाकरणस्य भर्तृहरेः कारणात् कथमिति पश्यामः। वाक्यपदीयस्य ब्रह्मकाण्डस्य प्रथमकारिकायामसौ भर्तृहरिः प्रतिपादयति-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रियाजगतो यतः।।**

अनेन प्रकारेण अक्षरस्य व्युत्पत्तिं यदा पश्यामः-सा भवति 'न क्षरतीति अक्षरम्'। अनया व्युत्पत्त्याऽपि भर्तृहरेरियं युक्तिः यक्तिसङ्गता प्रतिभाति। एतादृशमेव वर्णनं श्रीमद्भगवद्गीतायामपि भगवता प्रोक्तम्, यथा-

**अक्षरं ब्रह्मपरं स्वभावोऽध्यात्ममुच्यते।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः।।**

पुनः शब्दब्रह्मविषये इयमप्युक्तिः वाक्यपदीये प्राप्यते-

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**

यानि कान्यपि शास्त्राणि ज्ञानप्रदाने महत्त्वपूर्णानि सन्ति तेषाम् अस्तित्वं केवलं शब्दकारणैव। यदि अक्षरं न स्यात् तर्हि लिखितसाहित्यस्य कल्पनाऽपि भयङ्करी प्रतीयते। एतादृशमेव वर्णनं वाक्यपदीये प्राप्यते-

**एकमेवं यदाम्नातं भिन्नशक्तिव्यपाश्रयात्।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेन वर्त्तते।।**

अस्याः कारिकायाः भावः अयमेव वर्तते-वेदेष्वपि शब्दशास्त्रस्य महत्त्वं वरीवर्तते। यथा अन्यशास्त्रेषु जगतः लोकानाञ्च जन्ममरणादि-विवेचनं प्राप्यते तत्र आधारभूतं ब्रह्म भवति। तथैव वाक्यपदीये ब्रह्मणः अस्तित्वं दरीदृश्यते-

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिता।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः।।**

निष्कर्षरूपेण वक्तुं शक्यते यत् शब्देनैव लोकयात्रा प्रवर्तते। तस्याभावे एतद् जगद् अन्धकारमयं प्रतिभाति।

दण्डिनाऽप्युक्तम्-

वाचमेव प्रसादेन लोकयात्रा प्रवर्तते। लोके जनैः यत्किमपि कार्यं सम्पाद्यते चेत् तत्रापि शब्दास्यैव महत्त्वं दृश्यते। अस्याभावे लोके कस्यचिदपि पदार्थस्य बोधः न सम्भवति। अतः अनेन सिद्ध्यति यद् ब्रह्मैव शब्द इति।

**सन्दर्भग्रन्थसूची-**

१. संस्कृत शास्त्रों का इतिहास, बलदेव उपाध्याय, शारदा मन्दिर, वाराणसी

२. भाषाविज्ञान की भूमिका, आचार्य देवेन्द्रनाथ शर्मा, राधाकृष्ण प्राइवेट लिमिटेड, नई दिल्ली, २००८

३. संस्कृत व्याकरण शास्त्र का इतिहास, युधिष्ठिर मीमांसक, रामलाल कपूर ट्रस्ट, सोनीपत, हरियाणा, १९९४

आचार्यप्रथमवर्षीयः छात्रः
रा.सं.सं.,
श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः



# 15

# व्याकरणशिक्षापरम्परायां सारस्वतव्याकरणम्
# ( एकः परिचयः )

- **मुकेशकुमारः**

सकलजगदुत्पादकब्रह्मणः आरभ्य महादेव-इन्द्रादिदेवैः ततश्च महद्भिः ऋषिभिः स्वतपसाऽर्जितफलस्य सार्वभौमिकस्वरूपप्रदानाय परस्परविचारविनिमयाय च गीर्वाणवाण्याः परिनिष्ठितव्याकरणरसस्य अवश्यमेव पानं कृतं विद्यते इत्यत्र नास्ति संशीतिलेशः। यद्यपि कालान्तरे तु महर्षिणा पाणिनिना विरचितं व्याकरणमेव व्याकरणशास्त्रस्य प्रमुखः पर्यायः अभूत्। पाणिनेः महत्प्रचारकारणाद् पाणिनिना एव स्वीयाष्टाध्याय्यां स्मृतानि पूर्वतनाचार्यकृतव्याकरणानि प्रायः विलुप्तान्येव अभूवन् यानि अद्यापि नोपलभ्यन्ते।

कालान्तरे च अमुमेव पाणिनीयव्याकरणं सरलीकृत्य प्रस्तोतुं स्वीयकार्यं साधयितुं च बौद्ध-जैनसम्प्रदायानुयायिनः पाणिनीयपद्धतिमेवाश्रित्य नवीनव्याकरणानि रचयामासुः। अनेन पाणिनीयव्याकरणस्य विस्तारः बौद्ध-जैनसिद्धान्तेषु न्यूनः अभवत्, पाणिनीयव्याकरणस्य च अध्ययनं न्यूनमभवत्। ततः कातन्त्रव्याकरणपरम्परा निसृता यस्यां कालान्तरे सारस्वत-व्याकरणनाम्नाऽपि एका शाखा आविरभूत्। सारस्वतव्याकरणस्य रचयिता अनुभूतिस्वरूपाचार्यः इति अङ्गीक्रियते। इदं व्याकरणमपि पाणिनीयव्याकरणवदेव सूत्रपद्धतिद्वारा रचितं विद्यते। महर्षिपाणिनेः अनन्तरं रचितेषु संक्षिप्तव्याकरणेषु यद्यपि नाना-व्याकरणानां समावेशः भवति तथापि तेषु केवलं ७०० सूत्रेषु ग्रथितं सारस्वतं व्याकरणमिदं सरलतमं संक्षिप्तं च विद्यते।

अस्य व्याकरणस्य रचना सम्बद्धा एका कथा प्रसिद्धा विद्यते यत् कदाचित् कस्याञ्चित् शास्त्रार्थसभायां शास्त्रार्थं विदधानः अनुभूतिस्वरूपाचार्यः वृद्धावस्थाकारणात् 'पुंसु' इति पदस्य स्थाने 'पुंक्षु' इति पदस्य प्रयोगमकार्षीत् किन्तु अस्य असाधुपदस्य प्रयोगकारणाद् विद्वांसः अस्य सम्यगालोचनमकार्षुः, यद्धि अस्य आचार्यस्य कृते अपमानजनकमासीत्। अतः गृहमागत्य सः भगवत्याः सरस्वत्याः आराधनमारब्धवान्। सरस्वत्याः कृपाविशेषेण अयं ७०० सूत्राणि अवाप्य अग्रिमे दिने सभायां पुंक्षु इति रूपमपि साधु इति प्रादर्शयत्। अतः सरस्वत्याः प्राप्तानि इमानि सूत्राणि सारस्वतानि, इदञ्च व्याकरणं सारस्वतव्याकरणमिति प्रसिद्धमभूत्। यद्यपि सारस्वतव्याकरणस्यान्ते

'इति अनुभूतिस्वरूपाचार्यविरचिते' इति पाठः दृश्यते तथापि अस्य व्याकरणस्य रचयितृविषये बहवः प्रश्नाः उत्पद्यन्ते। विशेषतः अस्य व्याकरणस्य प्रारम्भिकश्लोके एकेन पदेन रचयितृविषयकः संशयः उत्पद्यते। अयं श्लोकः अत्र प्रस्तूयते–

**प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये।**
**सरस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम्।।**

अत्र 'सरस्वतीमृजुं कुर्वे' इति पदेनायमर्थः अवबुध्यते यद् अनुभूतिस्वरूपाचार्यः सरस्वतीप्रक्रियां ऋजुम् अर्थात् सरलं संक्षिप्तञ्चाकार्षीत् न तु नवीनतया रचितवानिति। अस्मिन् विषये आचार्याणां युधिष्ठिरमीमांसकवर्याणामपि अयमेवाशयः। आचार्यक्षेमेन्द्रः यश्च अस्य सारस्वतव्याकरणस्य टिप्पणव्याख्यामकरोत्, नरेन्द्राचार्यनामकमाचार्यम् अस्य व्याकरणस्य रचयितृरूपेण उपस्थापयति। अमृतभारतीनामकः अपरः अपि टीकाकारः यः सुबोधिनीटीकामरचयत, नरेन्द्रनगरीनामकं जनम् एतेषां सूत्राणां प्रणेतृरूपेण उद्घोषयति। तद्यथा–

**यन्नरेन्द्रनगरीप्रभाषितं यच्च वैमलसरस्वतीरितम्।**
**तन्मयात्र लिखितं तथाधिकं किञ्चिदेव ललितं स्वया धिया।।**

अयं नरेन्द्राचार्यः अपि कश्चन वैयाकरणः स्मृतः विद्यते विठ्ठलाचार्येण स्वीये 'प्रक्रियाकौमुदीप्रसादे'। इत्थं यद्यपि नानाविधसन्देहाः सन्ति सारस्वतव्याकरणस्य रचनाकारविषये तथापि अधिकांशतः जनाः अनुभूतिस्वरूपाचार्यमेव अस्य व्याकरणस्य रचनाकाररूपेण अङ्गीकुर्वन्ति।

व्याकरणमतिरिच्यापि अनुभूतिस्वरूपाचार्याः नैकान् ग्रन्थान् अरचयन्। तेषु ग्रन्थेषु प्रमुखाः सन्ति–१. गौडपादविरचितायाः माण्डूक्यकारिकायाः शाङ्करभाष्योपरि एका टीका २. अद्वैतवेदान्तस्य प्रमाणरत्नमाला ग्रन्थोपरि लिखिता टीका, ३. आनन्दबोधाचार्याणामेव न्यायदीपावलीटीकायाः उपरि एका टीका च।

अनेन इदमेव सिद्ध्यति यद् इमे आचार्याः न केवलं वैयाकरणाः, अपितु महान्तः वेदान्तिनः अपि आसन्।

**सारस्वतव्याकरणस्य वैशिष्ट्यम्–**

अस्य व्याकरणस्य लघुत्वमर्थात् संक्षिप्तस्वरूपमेव अस्य व्याकरणस्य वैशिष्ट्यमस्ति। यद्यपि जैनव्याकरणेषु आचार्यहेमचन्द्रस्य 'सिद्धहेमशब्दानुशासनम्' अत्यन्तं प्रसिद्धमासीत्। किन्तु तद्व्याकरणं बृहत्कायं विद्यते, अतः लघुस्वरूपकारणाद् तत्रापि अस्य सारस्वत-व्याकरणस्य एव अधिका मान्यता जनेषु अभवत्। न केवलं जैनसम्प्रदाये एव अपितु मुस्लिमशासकानामपि प्रियमभवदिदमेव व्याकरणम्। अस्योदाहरणभूतः भवति मालवाशासकः गयासुद्दीनखिलजी। अस्य शासनकाले संस्कृतशास्त्राणाम् आलोचनानिमित्तं सः

संस्कृताभ्यासार्थम् अन्यान् प्रेरितवान्। तत्र च संस्कृतव्याकरणज्ञानार्थं सारस्वतव्याकरणस्य एव आश्रयणं स्वीकृतं तैः इति श्रूयते।

**सारस्वतव्याकरणस्य वर्ण्यः विषयः–**

सारस्वतव्याकरणमिदं वृत्तित्रये विभक्तमस्ति। प्रथमायां वृत्तौ संज्ञाप्रकरणं, स्वरादिसन्धिप्रकरणं, स्वरान्त-सुबन्तशब्दादिप्रकरणं, स्त्रीप्रत्ययप्रकरणं, कारकं, समासः, तद्धितप्रकरणं चास्ति। द्वितीयायां वृत्तौ भ्वादिगणमारभ्य चुरादिगणपर्यन्तं तथा च नामधात्वादिप्रकरणस्यापि यथासम्भवं विवेचनं विहितमस्ति। तृतीयायां वृत्तौ अर्थक्रमेण कृत्-प्रत्ययानां विधानं कृतमस्ति।

पूर्वोक्तस्य पुंक्षुशब्दस्य सिद्धिनिमित्तं असम्भवे पुंसः कक् सौह्र इतीदं सूत्रं निर्मितमस्ति। येन सप्तमीबहुवचनान्तमिदं रूपं सिद्ध्यति। अत्र इदमपि वैशिष्ट्यं यत् वर्णसमाम्नाये पठितानां वर्णानां क्रमः अत्यन्तं भिन्नः अस्ति। अत्र प्रत्याहाराणां निर्माणार्थम् अनुबन्धानां पाठः न क्रियते। अतः अन्तिमवर्णैः एव निर्दिष्टं कार्यं सम्पद्यते।

अस्मिन् व्याकरणे वर्णसमाम्नाय इत्थं विद्यते–अ इ उ ऋ लृ ए ऐ ओ औ, ह य व र ल, ञ ण न ङ म, झ ढ ध घ भ, ज ड द ग ब छ ठ थ ख फ च ट त क प, श ष स'' चेति आहत्य ५२ वर्णाः व्याख्याताः सन्ति।

एतेषां मतानुसारं हस् इत्यादयः २० प्रत्याहाराः सन्ति। अनुभूतिस्वरूपाचार्याः यद्यपि प्रत्याहाराणां संख्यानियमस्तु नास्ति इति अवोचन्। अस्मिन् व्याकरणे संज्ञाप्रकरणस्य अन्ते सारल्येन वर्णव्याख्या विहिता वर्तते, तद्यथा–

**गजकुम्भाकृतिर्वर्ण ऋवर्णः स प्रकीर्तितः।**
**एवं वर्णा द्विपञ्चाशन्मातृकायामुदाहृताः।।**

एवमेव पाणिनिना उक्तानां २२ उपसर्गाणां स्वीकारपुरस्सरं स्वीयमतानुसारं 'श्रत्, अन्तं, आर्वि' इति त्रयाणां शब्दानामपि स्वीकारः कृतः विद्यते। एवमेव कारकप्रकरणे कर्ता-कर्मादिसंज्ञाः विनैव प्रथमादिविभक्तीनां विधानं कृतमस्ति। अत्रस्ति विशेषः यत् अधिकरणस्य षट्प्रकाराणां सरलोदाहरणेन व्याख्या कृता वर्तते। तद्यथा

**कटे शेते कुमारोसौ वटे गावः सुशेरते।**
**तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम्।।**
**युद्धे संनह्यते धीरोङ्गुल्यग्रे करिणां शतम्।**

ग्रन्थस्य अन्ते विशेषरूपेण आचार्यस्य अयं निर्देशः विद्यते यत् अनेन सारस्वत-व्याकरणेन येषां शब्दानां सिद्धिः न जायते तेषां सिद्धिः अन्यैः व्याकरणैः कर्तव्या इति।

इत्थं यद्यपि अत्यन्तसंक्षेपेण व्याकरणसूत्राणां प्रणयनकारणात् स्वीयोद्देश्यपूरणे कदाचिद् अस्पष्टता-असम्बद्धतादोषाः अपि समुत्पन्नाः सन्ति। तत्र च पाणिनीयव्याकरणस्य एवाश्रयणं स्वीकर्तव्यं भवति। एवञ्च भट्टोजीदीक्षितस्य कौमुद्याः अनन्तरम् एतेषां व्याकरणानां परम्परा लुप्तप्राया एव वर्तते। तथापि सत्स्वपि बहुषु व्याकरणेषु सारस्वतव्याकरणं महत्त्वपूर्णं स्थानं प्राप्नोत्।

**सन्दर्भग्रन्थसूची**-


१. भाषाविज्ञान की भूमिका, आचार्य देवेन्द्रनाथ शर्मा, राधाकृष्ण प्राइवेट लिमिटेड, नई दिल्ली, २००८

२. अर्थविज्ञान एवं व्याकरणदर्शन, कपिलदेव द्विवेदी, हिन्दुस्तानी एकेडमी, इलाहाबाद, १९५१

३. संस्कृत व्याकरण शास्त्र का इतिहास, युधिष्ठिर मीमांसक, रामलाल कपूर ट्रस्ट, सोनीपत, हरियाणा, १९९४

४. संस्कृत शास्त्रों का इतिहास, बलदेव उपाध्याय, शारदा मन्दिर, वाराणसी



ज्योतिषप्राध्यापकः (संविदा)
श्रीरघुनाथकीर्तिपरिसरः,
देवप्रयागः (उत्तराखण्डः)




# 16

# संस्कृतव्याकरणपरम्परायां काशिकावृत्तेः अमरकोशस्य च वैशिष्ट्यम्

-रोहितकुमारः

वि-आङ् उपसर्गपूर्वक् डुकृञ्-धात्तोः ल्युट्-प्रत्यये कृते 'व्याकरण'-शब्दस्य निष्पत्तिः जायते। व्याकरणमधीते इति वैयाकरणम्। व्याकरणस्य लक्षणं महाभाष्यकारः पतञ्जलिः एवं प्रकारेण करोति।

**"लक्ष्यलक्षणे व्याकरणम्''** इति।

अर्थात् शब्दो लक्ष्यः सूत्रं लक्षणम्। सर्वप्रथमं प्रश्नः जायते–'किन्नाम व्याकरणम्' इति। 'व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाऽनेनेति व्याकरणम्।'

संस्कृतशास्त्रपरम्परायाम् व्याकरणस्य स्थानं सर्वोपरि विद्यते। षड्स्वङ्गेषु प्रधानं व्याकरणम्। प्रधाने च कृते यत्नः फलवान् भवति। पाणिनीशिक्षायामुक्तमपि यथा-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुः निरूक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्मधीत्यैव ब्रह्मलोके महीयते।।**

अर्थात् वेदरूपिणः पुरुषस्य मुखं व्याकरणम् स्मृतम्। व्याकरणात् साधुशब्दानां ज्ञानं भवति। व्याकरणस्यापरं नाम शब्दशास्त्रम् अर्थात् शब्दानुशासनं वर्तते। व्याकरणशास्त्रस्य त्रिमुनिः पाणिनिः, कात्यायनः पतञ्जलिश्चेति वर्तते। पाणिनिः शालातुरीयः शालङ्कि तथा च दाक्षीपुत्र इति नाम्नाऽभिधीयते। पाणिनिकृतायाम् अष्टाध्याय्याम् अष्टौ अध्यायाः सन्ति। अत्र च चत्वारः पादाः वर्तन्ते। पाणिनीयव्याकरणे त्रयो व्याख्याग्रन्थाः लिखिताः– वृत्तिः, वार्तिक, भाष्यञ्च। तत्र वृत्ति-शब्दस्यार्थः शास्त्रप्रवृतिः वर्तते। सूत्र-व्याख्यान्तर्गते उदाहरणम् प्रत्युदाहरणम् वाक्याध्याहारस्य समावेशो दृश्यते। सृष्टिधराचार्येण व्याख्यानं पञ्चविधं कथितम्। तद्यथा-

**"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।**
**पूर्वपक्षः समाधानं व्याख्यानं पञ्च लक्षणम्।।''**

वार्तिकशब्दस्यार्थः "वृतेर्व्याख्यानम् वार्तिकम्।" अर्थाद् वृत्तेः लक्ष्यमुपस्थापयित्वा यो ग्रन्थो लिख्यते सः वार्तिकमिति कथ्यते।

एवमेव भाष्यस्यार्थः-आक्षेपं कृत्वा समाधानस्य कथनम् इति भाष्यम्।

अष्टाध्यायीवृत्तिकाराः सन्ति–पाणिनिः, व्याडिः, कुणिः, माधुरः, वररुचिः, देवनन्दी, जयादित्यवामनौ, जयन्तभट्टः, भट्टोजिदीक्षितः, अप्पयदीक्षित-प्रभृतयः। अष्टाध्याय्यां प्राचीनासु समुपलब्धासु वृत्तिषु काशिकावृत्तिः सर्वप्रधाना प्रामाणिकी च वर्तते। अस्योपरि जिनेन्द्रबुद्धिः, इन्दुमित्रः, विद्यासागरमुनिः, हरदत्तः प्रभृतिविद्वद्भिः व्याख्या कृता। इयं कृतिः जयादित्यवामनयोश्च सम्मिलिता कृतिर्वर्तते।

जयादित्यवामनौ च भगवतो बुद्धस्य अनुयायिनौ आस्ताम्। अस्याः रचनाकालः सप्तमी शती ई.पू. वर्तते। पाणिनीयायाम् अष्टाध्यायीं प्रति सर्वप्रसिद्धा वृत्तिः काशिका-वृत्तिरेव वर्तते। अस्याः वृत्तेः इयमपि विशेषता वर्तते यद् अस्यां गणपाठस्य समावेशो वर्तते' यः प्राचीनवृत्तिग्रन्थेषु नोपलभ्यते। काशिकाशब्दस्यार्थः 'काश्'-धात्तोः निष्पन्नो भवति। काशिकायाः व्याख्यातुः हरदत्तस्यानुसारेण काशिकायाः 'काशीषु भवा काशिका' इत्यर्थो लभ्यते। काशिकायाम् प्रारम्भिकाः पञ्च अध्यायाः जयादित्येन विरचिताः, अन्तिमाः त्रयः अध्यायाः वामनेन विलिखिताः।

**काशिकायाः व्याख्याग्रन्थः**–काशिकायां बहवो व्याख्याग्रन्थाः रचितास्सन्ति। तेषु प्रमुखव्याख्याकाराः जिनेन्द्रबुद्धिः, इन्दुमित्रः, महान्यासकारः विद्यासागरमुनिः, हरदत्तमिश्रः, वृत्तिरत्नाकरः प्रभृतयस्सन्ति। संस्कृतव्याकरणपरम्परायां काशिकायाः विशिष्टरूपेण योगदानं वर्तते। काशिका पाणिनीयसूत्राणां वृत्तिं प्रतिपादयति। अर्थात् सूत्राणां संक्षेपकारणात् अर्थेषु या अस्पष्टता वर्तते, तस्याः निराकरणं करोति। काशिकायाः अर्थस्य स्पष्टीकरणार्थं जिनेन्द्रबुद्धिना काशिकाविवरणपञ्जिका-नाम्ना टीकां लिलेख, यस्यापरं नाम न्यासटीका वर्तते। न्यासस्य व्याख्या-दृष्टिगते मैत्रेयरक्षितेन तन्त्रदीपनाम्ना टीकां लिलेख।

संस्कृतवाङ्मये अमरकोशस्य अद्वितीयं योगदानं वर्तते। श्रीमदमरसिंहो महान् बुद्धमतानुयायी वैयाकरणः वर्तते इति अमरकोशस्य प्रथमेनानेन पद्येन विदितं भवति। तद्यथा-

> **"यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः।**
> **सेव्यतामक्षयो धीरः स श्रिये चामृताय च।।"**

व्यावहारिकशब्दानाम् आवश्यकतापूर्तये संस्कृतवाङ्मये कोशविद्यायाः समुद्भवः समभववदिति ऐतिहासिकानां मतम्। विद्वत्सु राजसु च कोशसङ्ग्रहस्य चारितार्थ्यं विवृण्वतः कस्यापि श्रोत्रमनोऽभिरामेयमभियुक्तस्योक्तिरित्थं सुभाषितरूपेण हठात् सचेतसां हृदयान्यावर्जयति-

**"विदुषां भूभुजां वापि शब्दविद्या तथा प्रजा।**
**संसारे वशतामेति न विना कोशसङ्ग्रहम्।।''**

एतेषां विषयविभागाः काण्डादिभेदेन, कान्तादिभेदेन क्वापि वर्गभेदेन कुत्रचिच्चादि-मवर्णस्य प्रधानतया क्रियमाणा दरीदृश्यन्ते।

सम्प्रति महर्षेर्यास्कस्य निरुक्तम् एवोपलभ्यते, वर्तमानोऽयं निघण्टुः पञ्चाध्याया-परिमितः। अस्य काण्डत्रयम् नैघण्टुकाण्डमिति नाम्ना प्रसिद्धम्। चतुर्थं नैगमकाण्डमिति पञ्चमन्तु दैवतकाण्डमिति नाम्ना ख्यातिङ्गतम्, किन्तु अस्मिन् विषये नास्ति विदुषामैकमत्यम्। महाभारतस्यानुसारं प्रजापतिः कश्यप एव निघण्टु-ग्रन्थस्य रचयिता। यथा महाभारते मोक्षपर्वणि इयमुक्तिः आगता अस्ति-

**वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत।**
**निघण्टुकपदाऽऽख्याने विद्धि मां वृषमुत्तमम्।।**

**कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।**
**तस्मात् वृषाकपिं प्राह कश्यपो मां प्रजापतिः।।**

यद्यपि संस्कृतवाङ्मयस्य अंशांशपरिज्ञानाय व्याकरणस्य कोषसाहित्यस्य च परमावश्यकता प्रतिक्षणं विद्वद्भिरनुभूयते। अपि च सन्ति बहवः कोषग्रन्थाः, तथापि अमरकोषस्य कर्त्रा स्वनामधन्येन श्रीमदमरसिंहेन तृतीयकाण्डे व्याकरणसन्निवेशरूपं यद्वैशिष्ट्यं स्वकीयकोषे समुपन्यस्तं तदवलोक्य केनाप्यालोचकवरेण सूक्तं यत्-

**''अमरसिंहो हि पापीयान् सर्वं भाष्यमचूचुरत्"** इति।

एवं प्रकारेण संस्कृतव्याकरणे अमरसिंहस्य अमूल्यं योगदानं वर्तते।

व्याकरणशास्त्रं तु नितरां प्राचीनशास्त्रमस्ति। इदं तु वक्तुं शक्यं यदुपलब्धवैदिक-पदपाठेभ्यः प्राग्व्याकरणं शास्त्रं पूर्णतां गतमासीत्। वाल्मीकेः रामायणस्य रचनाकाले व्याकरणशास्त्रस्य अध्ययनम् अध्यापनञ्च सुव्यवस्थितया प्रचलितमासीत्। तद्धि-

**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्यवहारताऽनेन न किञ्चदपभाषितम्।।**

व्याकरणानि बहुभिः वैयाकरणैर्महिर्षिभिः प्रणीतानि। तेषु व्याकरणकर्तृषु विद्वत्सत्तमेषु-

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।**

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।**

एवं प्रकारेण एतेषु वैयाकरणेषु बौद्धवैयाकरणानाम् अर्थात् बौद्धमतानुयायिनां संस्कृतव्याकरणपरम्परायां महत्त्वपूर्णं योगदानं वर्तते इति।

**सन्दर्भग्रन्थाः-**

१. व्याकरणमहाभाष्यम्–पस्पशाह्निकम्

२. पाणिनीयशिक्षा

३. व्याकरणमहाभाष्यम्–प्रदीप (आचार्यः मधुसूदनप्रसादमिश्रः) (प्रस्तावना पृष्ठ सं. १७)

४. अमरकोशः

५. अमरकोश–व्याख्याकारः (डा. ब्रह्मानन्दत्रिपाठी) प्रास्ताविकम् (पृ.सं. ९)

६. महाभारतम्–मोक्षपर्वः

७. वैदिकवाङ्मयस्येतिहासः–आचार्यः जगदीशचन्द्रमिश्रः (पृ.सं. २६)

८. वैदिकवाङ्मयस्येतिहासः–आचार्यः जगदीशचन्द्रमिश्रः (पृ.सं. २६८)

व्याकरणाचार्यप्रथमवर्षीयच्छात्रः
रा.सं.सं.,
श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः (उत्तराखण्डः)



# 19

## रूपावतारस्थ-कारकावतारस्य प्रयोगानुशीलनम्

**-गोविन्दमिश्रः**

व्याकरणशास्त्रे सर्वधर्मानुयायिभिः ग्रन्थाः प्रणीताः। तेषु बौद्धधर्मानुयायिधर्मकीर्तिनापि रूपावताराख्यो ग्रन्थः प्रणीतः। अनेनाचार्येण धर्मकीर्तिना अस्य ग्रन्थस्य विभागोऽवतारेषु कृतः। अवतारेषु कारकावतारे रूपाणां (प्रयोगाणां) समुचितः स्वरूपः प्रस्तुतः। तेषां विवरणमस्मिन् शोधपत्रे प्रस्तोष्यते।

षड्विधकारकेषु मध्ये प्रथम् तावत् कर्ताकारकस्य लक्षणं कृतं ग्रन्थकारेण धर्मकीर्तिना-

**यः क्रियाव्याप्तितः स्थानं कुरुते मुख्यभावतः।**
**अप्रयुक्तः प्रयुक्तो वा स कर्त्ता नाम कारकम्।।**[१]

**अन्वयः**—यः मुख्यभावतः क्रियाव्याप्तितः स्थानं कुरुते अप्रयुक्तः प्रयुक्तो वा स कारकम् नाम कर्ता भवति।

**व्याख्या**—यः कारकः, मुख्यभावतः प्रमुखरूपात्, क्रियाव्याप्तितः क्रियाव्यापृतात्, स्थानं फलं, कुरुते प्राप्यते, अप्रयुक्तः प्रयुक्तो वा वाक्ये प्रयोगोऽप्रयोगो वा, स कारकं कर्ता भवतीति क्रियाया अध्याहारः। प्रोक्तमपि वाचस्पत्यकोशे कारकाणां प्रवृत्तौ निवृत्तौ च यो मुख्यः स कर्ता नाम विज्ञेयः।

**प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः।**
**स कर्ता नाम विज्ञेयः कारकाणां प्रयोजकः।।**

स च पञ्चविधः—स्वतन्त्रकर्ता, हेतुकर्ता, कर्मकर्ता, अभिहितकर्ता, अनभिहितकर्ता चेति। स्वतन्त्रकर्तुः उदाहरणमित्थं वर्तते-'देवदत्तः यज्ञं करोति।' अत्र स्वतन्त्रः कर्ता इत्यनेन कर्तृसंज्ञा। हेतुकर्ता—हितं लम्भयन्ति विनीतान् धीराः। तत्प्रयोजको हेतुश्च इत्यनेन हेतुकर्ता। कर्मकर्ता—स्वयमेव बुद्ध्यन्ते कुशलबुद्धयः। कर्मवत्कर्मणा तुल्यक्रियः इति कर्मवद्भावः।

एवञ्च कर्तुः उक्ते प्रथमा अनुक्ते तृतीया विभक्तिः भवति। आख्यात-कृत-तद्धितप्रत्ययानां समासस्य च कर्तरि विहितत्वादुक्तः कर्तेत्युच्यते। तस्मिन्नुक्ते कर्तरि "प्रातिपदिकार्थलिङ्गपरिमाण-" इत्यनेन प्रथमा। यदि प्रत्ययो न कर्तरि विहित इत्यनुक्तत्वात्

"कर्तृकरणयोस्तृतीया" (पा.सू. २/३/१८) इत्यनेन तृतीया विभक्तिः भवति। कर्तर्युक्ते यथा–जयति वैदिकधर्मः। ज्वलति हुताशनः। कारको देवदत्तः। वैयाकरणः पुरुषः। कृतः प्रणामो येन सः कृतप्रणामः पुरुषः। कर्तर्यनुक्ते–जीयते वैदिकधर्मेण। ज्वल्यते हुताशनेन। हस्तिना हतः। देवदत्तेन भुक्तम्।

कर्तुः क्रियया आप्तुमिष्टतम् कारकं कर्मसंज्ञं भवति। तस्मिन् अनभिहिते कर्मणि द्वितीया भवति। अभिहिते प्रथमा "अनभिहिते" इति सूत्राधिकारत्वात्। प्रोक्तमपि फलितार्थकथनं भट्टोजिदीक्षितेन कौमुद्यां–अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव। अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्–हरिः सेव्यते। कृत् लक्ष्म्या सेवितः। तद्धितः शतेन क्रीतः शात्यः। समासः –प्राप्त आनन्दो यं स प्राप्तानन्दः। क्वचिन्निपातेनाभिधानम्। यथा–विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्[2] तच्च कर्म निवर्त्य–विकार्य–प्राप्यभेदेन त्रिविधं भवति। एनं बौद्धधर्मानुयायी आचार्यः धर्मकीर्तिरपि वदति–

**निवर्त्यञ्च विकार्यञ्च प्राप्यञ्च त्रिविधं मतम्।**
**कर्तुर्यत् क्रियया व्याप्तं कटकाण्डगृहादिवत्।।**[3]

**भावार्थः**-कर्तुः क्रियया व्याप्तं आप्तुमिष्टतमं यत् कारकं, कटकाण्डगृहादिवत् निवर्त्यं विकार्यं प्राप्यञ्च त्रिविधं कर्मसंज्ञं भवति। उदाहरणम्-कटं करोति। काण्डं लुनाति। गृहं गच्छति।

अनीप्सितद्वेष्योदासीनानि कर्माणि "तथा युक्तञ्चानीप्सितम्" इत्यस्य सूत्रस्योदाहरणानि सन्ति। कथितमपि धर्मकीर्तिना–"ईप्सितादन्यदनीप्सितं द्वेष्यमितरच्च। विषं भक्षयति, चोरान् पश्यति, ग्रामं गच्छन् वृक्षमूलान्युपसर्पति।"[4]

द्विकर्मकधातुविषये धर्मकीर्तिना भाष्यकारिका उद्धृता। सा च इयं वर्तते–

**दुहियाचिरुधिप्रच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ।**
**ब्रूविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना।।**[5]

इति प्रकृतसूत्रस्थभाष्यकारिकायां पचिमथिमुष्यादयो न पठिताः। तथापि चकारेण तेषामपि ग्रहणं भवतीति कैयटः स्वीकरोति। भट्टोजिदीक्षितेन "अकथितञ्च" इत्यस्मिन् सूत्रे द्विकर्मकधातूनां परिगणनं कृतम्। तदित्थम्–

**दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।**
**कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्।।**[6]

एतेषां धातुनां योगे अकथितकर्मणः कर्मसंज्ञा भवति।

भर्तृहरिः कर्त्रा यद् विवक्षितं तत् कारकं करणसंज्ञमिति कथयति। तेन लिखितमपि वाक्यपदीये–

**क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्।।**
**वस्तुतस्तदनिर्देश्यं न हि वस्तुव्यवस्थितम्।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः।।**

यथा-स्थाली पचति, स्थाल्या पच्यते, स्थाल्या पचति, स्थाल्यां पचति इत्यादिषु स्थलेषु विवक्षाधीना विभक्तिः वर्तते। तथैव स्थाल्यादीनामपि करणत्वं विवक्षितम् इति भर्तृहरिकारिकया 'विवक्ष्यते' इत्यनेनांशेन ज्ञायते।

येन क्रियते तत् करणमिति व्युत्पत्या बहूनि कारकाणि क्रियायाः साधकानि भवन्ति तेषु प्रकृष्टोपकारकं करणसंज्ञं भवतीति भट्टोजिदीक्षितो मनुते। अयमेवाभिप्रायः धर्मकीर्तेरपि। भणितमपि तेन-

**समुद्दिष्टक्रियासिद्धौ यत्प्रकृष्टोपकारकम्।**
**करणं बाह्यमन्यत्र नेत्रादिविविधं मतम्।।**[७]

**अन्वयः**-समुद्दिष्टक्रियासिद्धौ यत्प्रकृष्टोपकारकं करणं बाह्यम् अन्यत्र (बाह्यादन्यत्र आभ्यन्तरं) नेत्रादिविविधं मतम्। द्विविधं करणं बाह्यमाभ्यन्तरञ्चेति। यथा-कुठारेण वृक्षं छिनत्ति, चक्षुषा पश्यति।

त्रिविधं सम्प्रदानं प्रेरकं अनुमन्तृ अनिराकर्तृ चेति। तत्र प्रेरकम्-उपाध्यायो गां ददाति, दीनाय भोजनं देहि। अनुमन्तृ यथा-श्राद्धाय निर्गहते, युद्धाय संनह्यते। अनिराकर्तृ-पुरुषोत्तमाय पुष्पं ददाति वैष्णवः।

तस्मै प्रयोजनाय इदं तदर्थम्, तस्मिन् तादर्थ्ये। तादर्थ्ये चतुर्थी वक्तव्या। उदाहरणानीमानि सन्ति-

**हिरण्यं कुण्डलायेदं दारु यूपाय युज्यते।**
**यज्ञाय पशवो नीता जाता विप्राः स्वकर्मणे।।**[८]
**संयमाय श्रुतं धत्ते धर्माय स यमं पुमान्।**
**धर्ममोक्षाय मेधावी धनं दानाय भुक्तये।।**[९]

**अन्वयः**-कुण्डलाय इदं हिरण्यं, यूपाय दारु युज्यते। यज्ञाय पशवो नीताः, स्वकर्मणे विप्राः जाताः। संयमाय श्रुतं धत्ते, स पुमान् धर्माय यमं धत्ते। मेधावी भुक्तये दानाय धर्ममोक्षाय (वा) धनं धत्ते।

प्रकृतेरन्यत्वमुत्पातः प्राणिनां शुभाशुभसूचको विकारः। उत्पातेन ज्ञाप्यमाने चतुर्थी विभक्तिर्वक्तव्या। यथा-

**वाताय कपिला विद्युदातपायातिलोहिनी।**
**पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्।।**[१०]

श्लाघह्नुङ्स्थाशपां प्रयोगे ज्ञीप्स्यमानाय (बोधयितुमिष्टः) सम्प्रदानं स्यात्। यथा–

**कृष्णाय श्लाघते गोपी ह्नुते कृष्णाय तिष्ठते।**
**शपते चापि तस्मै सा ज्ञीप्स्यमानाय कामतः।।**[११]

**अन्वयः**–श्लाघते ह्नुते तिष्ठते शपते (प्रयोगे) सा अपि कामतः तस्मै ज्ञीप्स्यमानाय। उदाहरणम्–गोपी कामतः कृष्णाय श्लाघते ह्नुते तिष्ठते वा।

द्विविधमपादानं चलमचलञ्चेति। चलं यथा–धावतो अश्वात् पतति। अचलं यथा–वृक्षात् पर्णं पतति।

कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी भवति। सम्बन्धसामान्यस्य उदाहरणानि-भूभृतो धनम्। समुद्रस्य तीरम्। पलालस्य भस्म, कुञ्जरस्य हस्तः। भूपस्य सेवकः। सेवकस्य खड्गः। आदित्यस्य रश्मिः।

प्रतिपदविधानाषष्ठ्याः उदाहरणानि–राजा शत्रूणामुज्जासयति, अविनीतस्य निप्रहन्ति। चौरस्योन्नाटयति। चौरस्य क्राथयति। पिनष्टि वा। अस्यां षष्ठ्यां समासो न भवति।

कारकषष्ठी–भवतः शायिका। पायसस्य भोक्ता, जगतः कर्ता कृष्णः। चतुर्विधमधि-करणं व्यापकम् औपश्लेषिकं वैषयिकं सामीपिकं चेति। उदाहरणानि पद्ये प्रस्तुतानि–

**आस्ते कटे देवदत्तो, गगने विहगश्चरेत्।**
**पुष्पे गन्धः, सुते प्रीतिः, वटे गावः सुशेरते।।**[१२]

**अन्वयः**–तत्र औपश्लेषिकं-कटे आस्ते। व्यापकं-तिलेषु तैलं। वैषयिकं-पुष्पे गन्धः, सुते प्रीतिः। सामीपिकं-वटे गावः सुशेरते।

''निमित्तात् कर्मयोगे'' इति वार्तिकं पठितं भट्टजिदीक्षितेन परन्तु धर्मकीर्तिना ''निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या''[१३] (वा) इति पठितम्। उदाहरणानि चेमानि प्रदत्तानि–

**चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।**
**वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।।**[१४]

अनेन प्रकारेण ग्रन्थकारेण धर्मकीर्तिना पद्यमाध्यमेन बहूनि उदाहरणानि प्रदत्तानि। परन्तु अस्मिन् शोधपत्रे प्रमुखरूपेण तान्येवोदाहरणानि प्रदत्तानि यानि सिद्धान्तकौमुद्यां न प्रदर्शितानि भट्टोजिदीक्षितेन।

(शोधच्छात्रः)
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.)
लखनऊपरिसरः, लखनऊ (उ.प्र.)



# 21

# संस्कृतव्याकरणस्य विकासे बौद्धधर्माश्रितवैयाकरणानां योगदानम्

**– शशिभूषणमिश्रः**

**उपक्रमः**–इह जगति 'भाषा भावस्य वाहिका' इति उच्यते। इयं भाषा हि लोकस्य सर्वश्रेष्ठनिधिरस्ति इति नास्ति सन्देहावकाशः। नह्येनां विना इह जगति जनाः किमपि चारु कर्तुं शक्नुयुः। जनानां विचाराः भाषयैव जनपदे सदैव प्रसरन्ति। इयं भाषा तु अस्माकं सांस्कृतिक–सामाजिकादि–व्यवहारस्य माध्यमरूपा भवति। ततः एतदर्थं दण्डी काव्यादर्शे उदात्तकण्ठेन वदति–

**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।**

मानवजातेः अभ्युदयविकाशप्रगतयः भाषां विना न सम्भवन्ति। जगति च यावन्तो वर्तमाना व्यवहारास्ते समे भाषानुपातिन एवेति प्रत्यक्षानुभवेन सिद्धम्।

अत एव हरिणोक्तम्–

**न सोऽस्त प्रत्ययो लोके यच्छब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**

**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।।**

अपि च यदि भाषाज्योतिर्न स्यात्तदा समग्रं भुवनत्रयमज्ञानान्धकारेण व्याप्तं भवेत्। वदति चात्र आचार्यः दण्डी–

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**

भाषायाः प्रयोगक्षेत्रं तु विशालम्। अस्मिन् विषये पस्पशाह्निके पतञ्जलिपादाः वदन्ति–

'महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाहवृच्यम्, नवधाऽऽथर्वणो वेदः वाकोवाक्यम्, इतिहासः, पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः।'

पुनः अस्याः भाषायाः स्वरूपं सर्वदा परिवर्तते। भाषा काठिन्यं जहाति, सारल्यं चाददाति। यदा भाषा लोकप्रिया सुसम्पन्ना च भवति, तदा भाषाविदो भाषागतशब्दानामपभ्रंशेभ्यो रक्षणाय, तां व्याकरणनियमशृङ्खलाबद्धां कुर्वन्ति। अत एव व्याकरणं शब्दानुशासनमित्युच्यते। एका भाषा तदा कालजयी भविष्यति, यदा तस्याः भाषायाः एकं सुसमृद्धं सर्वजनग्राह्यं व्याकरणं भविष्यति। यष्टिं विना पङ्गुव्यक्तेः यादृशी अवस्था, व्याकरणं विना भाषायाः तादृशी अवस्था भवति। भाषाशृङ्खलार्थं कालान्तरे व्याकरणस्योत्पत्तिर्याता। भारतभूखण्डे व्याकरणावतारः अतिप्राचीनः। सकलशास्त्रशिरोभूतं वेदपुरुषस्य मुखत्वेन स्मृतमिदम् अतिप्राचीनकालात् प्रातिशाख्यशिक्षादिरूपेण अस्य विकासः दृते। परन्तु कस्मादारभ्य इदं व्याकरणं प्रवर्तितमभूदिति विषये न शक्यते तत्त्वतो निरूपयितुमं, तथापि विद्वांसः कथयन्ति व्याकरणस्य वीजं वैदिकसंहितासु दृश्यते। अस्य व्याकरणस्य विकासार्थं न केवलं हिन्दुवैयाकरणाः योगदानं दत्तवन्तः, अपितु जैनवैयाकरणाः, बौद्धवैयाकरणाः, खिष्टधर्माश्रितवैयाकरणाः तथा अन्येऽपि वैयाकरणाः स्वकीयामूल्ययोगदानं दत्तवन्तः। अस्मिन् लघुशोधप्रबन्धे व्याकरणपदार्थविषये तथा बौद्धवैयाकरणानां योगदानविषये समासेन चर्चा क्रियते।

**व्याकरणपदार्थविवेचनम्–**

व्याकरणपदेन किं बोध्यते इति विषये परम्परायां भाषायां च चर्चा समुपलभ्यते। 'व्याकरणम्' इति शब्दस्य कोऽर्थः?

निम्ने संक्षेपेण तेषाम् आलोचनं भवति।

**भाष्यकारस्य मतम्**-प्रथमतः व्याकरणस्य पदार्थविषये भाष्यकारोऽपि पस्पशाह्निके स्वकीयविचारं समुपस्थापयति। पतञ्जलिः तत्र पस्पशायां पूर्वपक्षमाध्यमेन सूत्रं व्याकरणं, शब्दः व्याकरणं तथा शब्दसूत्रयोः सम्मिलितरूपं च व्याकरणं इति पक्षत्रयं समुपस्थाप्य सिद्धान्ततः सूत्रं व्याकरणम् इति विचारं स्थापयति। तस्य विचारः यथा–

'अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः? सूत्रं सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः। सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते व्याकरणस्य सूत्रमिति। किं हि तदन्यत्सूत् व्याकरणं यस्याद:सूत्रं स्याद्य् शब्दाप्रतिपत्तिः प्राप्नोति-व्याकरणाच्छब्दान्प्रतिपद्यामहे इति। न हि सूत्रत एव शब्दान्प्रतिपद्यन्ते। किं तर्हिघ् व्याख्यानतश्च। ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति। न केवलानि चर्चापदानि व्याख्यानम्-बृद्धिः आत् एजिति। किं तर्हिघ् उदाहरणं प्रत्युदाहरणं वाक्याधाहारः इत्येतत्समुदितं व्याख्यानं भवति। एवं तर्हि शब्दः। शब्दे ल्युडर्थः। यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते। व्याक्रियन्तेऽनेनेति व्याकरणम् न हि शब्देन कंचिद् व्याक्रियते। केन तर्हिघ् सूत्रेण। भवे च तद्धितः। भवे च तद्धितो नोपपद्यते-व्याकरणे भवे योगो वैयाकरण इति। न हि शब्दे भवो योगः। क्व तर्हि सूत्रे। प्रोक्तादयश्च तद्धिताः। प्रोक्तादयश्च तद्धिता नोपपद्यन्ते। पाणिनिना प्रोक्तं पाणिनीयम्,

आपिशलम् काशकृत्स्नमिति। न हि पाणिनिना शब्दाः प्रोक्ताः। किं तर्हिघ् सूत्रम् किमर्थमिदमुभयमुच्यते–भवे प्रोक्तादयश्च तद्धिताः इति। न प्रोक्तादयश्च तद्धिताः इत्येव भवेऽपि तद्धिश्चोदितः स्यात् पुरस्तादिदमाचार्येण दृष्टं–भवे च तद्धितः इति, तत्पठितम् तत उत्तरकालमिदं दृष्टं–प्रोक्तादयश्च तद्धिताः इति तदपि पठितम् न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति। अयं तावददोषः यदुच्यते शब्दे ल्युडर्थः इति। नावश्यं करणाधि–करणयोरेव ल्युड् विधीयते। किं तर्हि? अन्येष्वपि कारकेषु कृत्यल्युटो बहुलम् इति। तद्यथा–प्रपतनमिति। अथवा शब्दैरपि शब्दा व्याक्रियन्ते। तद्यथा–गौरित्युक्ते सर्वे सन्देहा निवर्तन्ते, नाश्वो न गर्दभ इति। अयं तर्हि दोषः–भवे प्रोक्तादयश्च तद्धिता इति। एवं तर्हि? लक्ष्यलक्षणे व्याकरणम् लक्ष्यं च लक्ष्यणं चौतत्समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यं, किं लक्षणम्? शब्दो लक्ष्यः सूत्रं लक्षणम् एवमप्ययं दोषः–समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपद्यते। सूत्राणि चाप्यधीयान् इष्यते–वैयाकरण इति। नैष दोषः। समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद्यथा–पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लः, नीलः, कृष्ण इति। एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेऽपि वर्तते। अथ वा पुनरस्तु सूत्रम् ननु चोक्तम्–सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः इति। नैष दोषः। व्यपदेशिवद्भावेन भविष्यति। यदप्युच्यते शब्दाप्रतिपत्तिरिति। न हि सूत्रत एव शब्दान्प्रतिपद्यन्ते। किं तर्हि? व्याख्यानतश्चेति। पतिहृतमेतत्तदेव सूत्रं विगृहितं व्याख्यानं भवतीति। ननु चोक्तम्–न केवलानि चर्चापदानि व्याख्यानम्–वृद्धिः, आत्, ऐजिति। किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितव्याख्यानं भवतीति। अवुजानत एतदेवं भवति। सूत्रत एव हि शब्दान्प्रतिपद्यन्ते। आतश्च सूत्रत एव यो ह्युत्सूत्रं कथयेन्नादो गृह्यते।

अत्र भाष्यकारः पक्षत्रयं समुपस्थापयति, यथा–सूत्रपक्षः नाम लक्षणपक्षः, शब्दपक्षः नाम लक्ष्यपक्षः तथा उभयपक्षः नाम लक्ष्यलक्षणपक्षः। अन्ते भाष्यकारः सूत्रं व्याकरणम् इति सिद्धान्तपक्षं समर्थयति। अत्र पक्षे षष्ठ्यर्थानुपपत्तिदोषं वारयन्नाह भाष्यकारः व्यपदेशिवद्भावेन कार्यं सिध्यति। वस्तुतस्तु सूत्रत एव शब्दानां ज्ञानं विधीयते। सूत्रद् बहिर्यदस्ति तस्य ग्रहणं न भवति इति भाष्यसिद्धान्तपक्षः।

**कोशकाराणां मतम्**–कोषकाराः अपि 'व्याकरणम्' इति पदेन किं ज्ञायते तदेव बोधयितुं चेष्टिताः भवन्ति। सन्दर्भेऽस्मिन् 'व्याक्रियन्ते अर्थाः येन इति व्याकरणम्' इति शब्दकल्पद्रुमः प्रतिपादयति। पुनः सन्दर्भेऽस्मिन् वाचस्पत्यं वदति 'व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत् प्रतिपाद्यन्ते शब्दा येन तद् व्याकरणम्' इति।

**परम्परामतम्**–व्याकरणशास्त्रस्य सुदीर्घपरम्परायां व्याकरणशब्दस्यार्थादिविषयेऽपि सुमधुरवर्णना समुपलभ्यते। प्रथमतः परम्परायाम् उक्तमस्ति–श्व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेन इति व्याकरणम्। पुनः परम्परायां प्राप्यते–

**प्रकृत्यादिविभागेन शब्दानामनुशिष्यते।**
**साधुत्वं येन तत् शास्त्रं वेद्यं व्याकरणाभिधम्।**

**व्याक्रियन्ते पदानिह क्रियन्ते नूतनानि च।**
**अन्वाख्यानस्मृतिस्तस्मादुक्ता व्याकरणं बुधैः।।**

**व्याकरणशब्दस्य समानार्थकशब्दविचारः–**

व्याकरणस्य कृते शास्त्रे समानार्थकाः शब्दाः प्राप्यन्ते। तेषु केचन यथा–

**(क) शब्दानुशासनम्**–प्रथमतः व्याकरणपदस्य कृते 'शब्दानुशासनम् इति पदस्य व्यवहारः अपि परिदृश्यते। पस्पशाह्निकस्य प्रारम्भे आचार्येण पतञ्जलिना भणितम्–'अथ शब्दानुशासनम्'। कैयटः इह वदति–'व्याकरणस्य चेदमन्वर्थं नाम शब्दानुशासनमिति। शब्दानुशासनम् नाम 'शब्दानाम् अनुशासनम्'। इह 'शब्दानाम्' इति विशेषणपदम् 'अनुशासनम्' च विशेष्यपदम् अनुशिष्यते इति अनुशासनम् शब्दानाम् अनुशासनम् इति शब्दानुशासनम् शब्दानुशासनस्य विग्रहवाक्यं समासं तथा अर्थं नीत्वा परम्परायां विचाराणां प्राबल्यं प्राप्यते। इह 'शब्दानुशासनम्' इति समासान्तपदम् शब्दानाम् अनुशासनम् शब्दानुशासनम् षष्ठीतत्पुरुषः समासः। पुनः अनु शास् ल्युट् 'करणे' सु अनुशासनम् 'अनुशिष्यन्ते अनेन इति अनुशासनम्' अर्थात् अनुशिष्यन्ते अपशब्देभ्यो विविच्य साधुशब्दा अनेनेत्यनुशासनं नाम शास्त्रम्। शब्दानुशासनं प्रतिपादयित्वा पदमञ्जरी वदति–

**विविक्ताः साधवः शब्दा प्रकृत्यादिविभागतो।**
**ज्ञाप्यन्ते येन तच्छास्त्रमत्र शब्दानुशासनम्।**

पुनः श्शब्दानाम् अनुशासनम्श् इति शब्दानुशासनस्य विग्रहवाक्ये विद्यमाने पदे केन विधिना षष्ठी इति विषये शास्त्रे वर्णना प्राप्यते। 'शब्दानाम्' इत्यस्य कर्मणि षष्ठी। तर्हि प्रश्नः उदेति यदि 'शब्दानाम्' इत्यत्र कर्मणि षष्ठि भवति, तर्हि 'कर्मणि च' (पा. , २/२/१४) इत्यनेन षष्ठी निषेधः भवति। परन्तु आशङ्केयमाधारशून्या। कारणं यत्र 'उभयप्राप्तौ कर्मणिश्द्धपाण्' २/३/६६, इत्यनेन षष्ठी भवति, तत्र 'कर्मणि च' (पा., २/२/१४) इत्यस्य सूत्रस्य प्राप्तिः भवति। परन्तु 'शब्दानाम् अनुशासनम्' इति विग्रहवाक्यस्य अर्थः भवति–आचार्यकर्तृकं शब्दकर्मकम् अनुशासनम्। इह 'शब्दानाम्' इति कर्म। परन्तु अत्र वाक्ये कर्तुः आचार्यस्य उल्लेखः नास्ति। अर्थादत्र 'पाणिनिकर्तृत्वम्' स्वतः गम्यमानं भवति, न तु शब्दप्रतिपाद्यम् ततः इह 'उभयप्राप्तौ कर्मणि' (पाण् २/३/६६) इति सूत्रस्य अवसरः नास्ति कर्तृवाचकपदस्योल्लेखाभावात्। ततः इह 'कर्तृकर्मणोः कृति' (पाण् २/३/६५) इत्यनेन सूत्रेण 'अनुशासनम्' इति कृदन्तपदयोगे कर्मणि षष्ठी भूत्वा 'शब्दानाम्' इति रूपं भवति। पुनः केचन वदन्ति इह 'षष्ठी शेषे' (पा., २/३/५०) इत्यनेन षष्ठी विभक्तिः अपि भवति।

**( ख ) शब्दशास्त्रम्**-द्वितीयतः पुनः व्याकरणशास्त्रयापरं नाम भवति 'शब्दशास्त्रम्' इति। अतः शब्दानां शास्त्रम् शब्दशास्त्रं भवति इदं व्याकरणम् व्याकरणशास्त्रं शब्दानां साधुत्वं बोधयति। 'शब्दशास्त्र'शब्दस्य प्रयोगः बहुत्र प्राप्यते। भट्टोजिदीक्षितः 'स्वं रूपं' इति सूत्रे शब्दशास्त्रपदं व्यवहरति। यथा-'शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना।'

**( ग ) स्मृतिः**-तृतीयतः इदं व्याकरणं 'स्मृतिश्रूपेण अपि अस्माकं परम्परायां परिचितं भवति। एतदर्थं 'व्याकरणस्मृतिः' इति शब्दस्य प्रयोगः हरिणा कृतः।

यथा आह हरिः-

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धानम्।**

इह हरिवृषभः वदति-

यथैव भक्ष्याभक्ष्यगम्यागम्यवाच्यावाच्यादिविषया व्यवस्थिताः स्मृतयः, यासु निबद्धं समाचारं शिष्टा न व्यतिक्रामन्ति, तथेयमपि वाच्यावाच्यविशेषविषया व्याकरणाख्या स्मृतिः। स्मृतो ह्यर्थः पारम्पर्यादविच्छेदेन पुनः पुनर्निबध्यते, प्रसिद्धसमाचारायां स्मृताव-निबन्धानशब्दायां शिष्टसमाचाराविच्छेदेनैव स्मर्यते। (अत्रैव)

**( घ ) आगमः**-चतुर्थतः इदं व्याकरणं परम्परायाम् श्आगमश्रूपेण परिचितं भवति। पतञ्जलिः आगमप्रयोजने इदं स्वीकरोति। ततः आचार्यः पतञ्जलिः पस्पशाह्निके पठति-

'आगमः खल्वपि। ब्रह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम् प्रधाने च कृतो यत्नः फलवान् भवति।'

पुनः व्याकरणस्य आगमत्वं स्वीकृत्य चतुर्थमुनिभर्तृहरिः वाक्यकदीये वदति-

**'यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।**
**काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः।।'**

**( ङ ) शब्दविद्या**-पञ्चमतः इदं व्याकरणं परम्परायां 'शब्दविद्या'रूपेण परिचितं भवति। एतदर्थं महाकविमाघेन शिशुपालवधे महाकाव्ये उक्तम्-

**शब्दविद्येव नो भाति राजनीतिरपस्पशा।**

**( च ) शब्दतत्वम्**-षष्ठतः व्याकरणस्य अपरपरिचयः शब्दतत्त्वरूपेण भवति। विषयेऽस्मिन् चतुर्थमुनिभर्तृहरिः वदति-

**अनादिनिधानं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**

**( छ ) शब्द**:-सप्तमत: व्याकरणस्यापरनाम भवति 'शब्द'। एतदर्थं 'स्वं रूपं शब्दस्याशब्दसंज्ञा' (पा., १/१/६९) इत्यत्र 'अशब्दसंज्ञा' न - शब्द - संज्ञा न व्याकरण संज्ञा इति बोध: भवति। नागेश: शेखरे वदति-'शब्दपदेन च शब्दशास्त्रम्'।

**( ज ) शब्दलक्षणम्**-व्याकरणस्य कृते 'शब्दलक्षणम्' इति शब्दस्य व्यवहार: अपि परम्परायां प्राप्यते। प्रसिद्धबौद्धवैयाकरण: चन्द्रगोमी स्वकीयव्याकरणस्य सर्वाङ्गपूर्णत्वं समर्थयित्वा स्वयं स्वकीयचान्द्रव्याकरणस्य स्वोपज्ञवृत्तौ 'शब्दलक्षणम्' इति पदं व्यवहरति। यथा-'लघुविस्पष्टसम्पूर्णमुच्यते शब्दलक्षणम्'।

**( झ ) प्रकृतिप्रत्ययादिनियामकशास्त्रम् धापदसाधुत्वविधायकशास्त्रम्**-अष्टमत: लौकिकजगति इदं व्याकरणं 'प्रकृतिप्रत्ययादिनियामकशास्त्रश्रूपेण तथा कदाचित् 'पदसाधुत्वविधायकशास्त्ररूपेण अपि परिचितं भवति।

अत: अनेन प्रकारेण व्याकरणं 'शब्दानुशासनम्', 'शब्दशास्त्रम्', 'व्याकरणस्मृति:', 'व्याकरणागम:', 'शब्दविद्या', 'शब्दतत्त्वम्', 'शब्द:', 'प्रकृतिप्रत्ययादिनियामकशास्त्रम्' 'पदसाधुत्वविधायकशास्त्रम्'-इत्यादिरूपेण परम्परायां परिचितं भवति।

**संस्कृतव्याकरणस्य विकासे विविधधर्माश्रितवैयाकरणानां योगदानम्**-संस्कृत-व्याकरणस्य विकासे विविधधर्माश्रितवैयाकरणानां योगदानं विद्यते। अस्य संस्कृतव्याकरणस्य विकासार्थं न केवलं हिन्दुवैयाकरणा: योगदानं दत्तवन्त:, अपितु जैनवैयाकरणा:, बौद्धवैयाकरणा:, खीष्टधर्माश्रितवैयाकरणा: तथा अन्येऽपि वैयाकरणा: स्वकीयामूल्ययोगदानं दत्तवन्त:।

हिन्दुवैयाकरणेषु परम्परास्त्रष्टार: वैयाकरणा: भवन्ति-'अष्टाध्यायी'कर्ता 'पाणिनि:', 'वार्तिक'कार: 'कात्यायन:', 'महाभाष्य'कार: 'पतञ्जलि:', 'सिद्धान्तकौमुद्यादि'ग्रन्थकर्ता 'भट्टोजिदीक्षित:', 'लघुशब्देन्दुशेखरादि'ग्रन्थकर्ता 'नागेश:', 'प्रदीप'कर्ता 'कैयट:', 'शाकटायनव्याकरण'कर्ता 'शाकटायन:', तथा एतादृशा: अन्येऽपि वैयाकरणा: प्रसिद्धा: भवन्ति। तेनैव प्रकारेण जैनवैयाकरणेषु 'हैमशब्दानुशासन'स्य कर्ता 'हेमचन्द्र:', 'जैनेन्द्रव्याकरण'कार: 'देवनन्दी', कातन्त्रस्य 'चतुष्कव्यवहारढुण्ढिका-'व्याख्याया: स्रष्टा 'धानप्रभसूरि:' कातन्त्रव्याकरणस्य 'दुर्गप्रबोध'टीकाया: कर्ता 'जिनप्रबोधसूरि:', कातन्त्रव्याकरणस्य दुर्गपदप्रबोधटीकाया: 'दुर्गपदप्रबोध:', इति व्याख्याया: कर्ता 'प्रबोधमूर्तिगणि:' 'उणादिवृत्ते:' कर्ता 'क्षपणक:' 'अपरनाम सिद्धसेनदिवाकर:', जैनेन्द्रव्याकरणस्य 'महावृत्ते:' स्रष्टा 'अभयनन्दी', 'शब्दार्णव:' इति जैनेन्द्रव्याकरणस्य दाक्षिणात्यसंस्करणस्य संस्कर्ता 'गुणनन्दी', शब्दार्णवस्य व्याख्याता 'सोमदेवसूरि:', 'जैनशाकटायनव्याकरण'स्य तथा तस्योपरि 'अमोघा' इति वृत्ते: कर्ता पाल्यकीर्ति:, रूपसिद्धि'रिति लघुप्रक्रियाग्रन्थस्य कर्ता 'दयालपालमुनि:', 'बुद्धिसागरस्य (अपरनाम 'पञ्चग्रन्थी') स्रष्टा श्वेताम्बरसम्प्रदायस्य आचार्य: 'बुद्धिसागरसूरि:', 'दीपक'व्याकरणस्य

स्त्रष्टा 'भद्रेश्वरसूरिः', 'शब्दानुशासन'स्य कर्ता 'मलयगिरिः' तथा एतादृशाः अन्येऽपि प्रसिद्धाः वैयाकरणाः भवन्ति।

तेनैव प्रकारेण बौद्धवैयाकरणेषु 'धातुप्रदीप'स्य कर्ता 'मैत्रेयरक्षितः', 'न्यास'कारः जिनेन्द्रबुद्धिः', 'रूपावतार'स्य कर्ता 'धर्मकीर्तिः', 'ऐन्द्रव्याकरण'स्य कर्ता 'इन्द्रगोमी', 'चान्द्रव्याकरण'स्य कर्ता 'चन्द्रगोमी', 'काशिका'कारौ 'जयादित्य'-'वामनौ', पाणिनेर्भाषासूत्राणि अधिकृत्य 'भाषावृत्ति'विधायक', 'पुरुषोत्तमदेवः' 'दुर्घटवृत्ति'कारः 'शरणदेवः', 'भागवृत्तिकारः' 'विमलमतिः', 'लिङ्गानुशासन'स्य कर्ता 'वामनः', 'तन्त्रप्रदीप'कारो 'मैत्रेयरक्षितः', चान्द्रसूत्रस्य 'बालबोधिनी' इति वृत्तेः कर्ता 'कश्यपभिक्षु' इति तथा अन्ये च एतादृशाः पण्डिताः प्रसिद्धाः सन्ति।

तेनैव प्रकारेण खिष्टधर्माश्रितवैयाकरणेषु महाभाष्यस्य आंग्लव्याख्यानस्य कर्ता 'श्रुड्वर्गन्'महोदयः, महाभाष्यस्य संस्कर्तारौ 'कीलहार्न', 'कार्डोना' च, लघुसिद्धान्तकौमुद्याः आंग्लव्याख्याकारः 'बालेण्टाइन्'महोदयः, 'पाणिनि' इति पुस्तकस्य कर्ता 'थिओडर-गोल्डष्टुकर'महोदयः, विविधशोधपूर्णप्रबन्धानां कर्ता 'जान् हुवेन्'महोदयः, व्याकरणस्योपरि विविधशोधपूर्णग्रन्थानां कर्ता 'पाउल्-किपार्स्कि'महोदयः तथा अन्ये च एतादृशाः पण्डिताः प्रसिद्धाः विद्यन्ते।

**बौद्धवैयाकरणानां व्याकरणस्य विकासे योगदानम्–**

संस्कृतव्याकरणस्य विकाशाय योगदानदातारः कतिपयात्यन्तप्रसिद्धबौद्धाः वैयाकरणाः भवन्ति–

**(क) आचार्यः चन्द्रगोमी**–उपलब्धबौद्धवैयाकरणेषु प्रसिद्धः भवति चन्द्रगोमी। अस्य आचार्यस्य विषये प्रामाणिकतथ्यानामभावः परिलक्ष्यते। 'गोमिन्' इति बुद्धशिष्येषु अन्यतमः आसीत्। अयं गोमिन्शब्दः चन्द्राचार्येण पूज्यार्थे निपातितः। परन्तु अयं शब्दः पाणिनिना निपातनेन मत्वर्थे निष्पादितः भवति। ततः एतेन अयं चन्द्राचार्यः 'गोमिन्' वंशस्य बौद्धमतावलम्बिनः अपत्यमासीदिति अनुमीयते। पुनः अयं काश्मीरदेशे अजायत इति विद्वांसः भणन्ति। मीमांसकस्य मतानुसारेणास्य समयः भवति विक्रमपूर्वसंवत्। अयं भवति चान्द्रव्याकरणस्य कर्ता। पुनः अस्य व्याकरणस्योपरि अनेन एका स्वोपज्ञवृत्तिः विरचिता आसीत्। व्याकरणमिदं सर्वाङ्गपूर्णं भवतीति स्वयं चन्द्राचार्यः स्वकीयस्य चान्द्रव्याकरणस्य स्वोपज्ञवृत्तौ वदति। यथा-'लघुविस्पष्टसम्पूर्णमुच्यते शब्दलक्षणम्' संक्षेपेण अस्य कृतयः भवन्ति-'चान्द्रव्याकरणम्' 'चान्द्रवर्णसूत्राणि', 'चान्द्रपरिभाषासूत्राणि' 'चान्द्रधातुपाठः', 'चान्द्रोणादिसूत्राणि', 'महाभाष्यस्य पुनरुद्धारः', 'चान्द्रव्याकरणसूत्रवृत्तिः' तत्रैव गणपाठश्च' 'शिष्यलेखः' इति धर्मकाव्यम्, 'आर्यसाधनशतकम्' इति काव्यम्, 'आर्यतारान्तरबलिविधिः' इति स्तुतिकाव्यम्, तथा 'लोकानन्दः' इति नाटकम्। इदं लोकानन्दनाटकम् अधुना तिब्बतभाषायामुपलभ्यते।

पाणिनिकात्यायानपतञ्जलीति प्रधानाचार्यत्रयादनन्तरं चन्द्रगोमिन एव नामात्र व्याकरणाकाशे देदीप्यमानं नक्षत्रमिव वर्तते। चान्द्रव्याकरणं संस्कृतव्याकरणेषु सरलतायां पूर्णतायां च अस्ति अद्वितीयम् लौकिकशब्दानुशासनं यथा चान्द्रं परिपूर्णं तथा नान्यद् कृतमस्ति। पुनः व्याकरणसूत्रेषु साम्प्रतं या या वृत्तयः समुपलभ्यन्ते, तत्र सर्वत्र चन्द्रगोमिनः वृत्तेरनुकरणं स्पष्टं प्रतीयते। इत्थं वृत्तिलेखनश्रेयः प्राथम्यमपि तमेवानुगच्छति इति सन्देहस्य विषयः। व्याकरणग्रन्थे निर्दुष्टसूत्रैः सह तेषां वृत्युदाहरणप्रत्युदाहरणानां सूत्रतात्पर्यावगमनाय तेषां यथोचितलक्ष्यसङ्गमनाय च वर्णसूत्र-गणपाठ-धातुपाठोणादिसूत्र-परिभाषासूत्राणाम् एकत्र समावेशः परमावश्यकः। चन्द्राचार्येणैव सर्वप्रथम् पूर्वोक्तसर्वविध-समावेशसम्पन्नो ग्रन्थो लिखितः अस्ति। सर्वप्रथमं व्याकरणस्य साङ्गोपाङ्गमेकत्र निरूपणं बौद्धवैयाकरणस्य चन्द्रगोमिनः कार्यम्।

**( ख ) जयादित्यः वामनः च**-संस्कृतव्याकरणस्य परम्परायां जयादित्यवामनयोः स्थानं स्वर्णाक्षरैः लिपिबद्धमस्ति। अनयोः काशिकावृत्तिं विहाय पाणिनीयव्याकरणस्य विशेषतः महाभाष्यस्य तत्त्वावबोधनमसम्भवम् एतौ बौद्धधर्माश्रितौ वैयाकरणौ। एतौ भ्रातरौ। अनयोर्मध्ये जयादित्यः अग्रजः तथा वामनः अनुजः भवति। अनयोः प्रसिद्धग्रन्थः भवति काशिकावृत्तिः। काश्यामस्य ग्रन्थस्य विरचनकारणात् अस्य कृते 'काशिका' इति नाम्नः व्यवहारः दृश्यते इति वादः लोके प्राप्यते। इयं काशिकावृत्तिः 'एकवृत्तिः' इति रूपेण तथा कदाचित् 'सद्वृत्तिः' इति रूपेणापि जगति परिचिता भवति। अस्य ग्रन्थस्य पञ्चमाध्यायपर्यन्तं जयादित्येन विरचितम्, तस्य परलोकगमनादनन्तरं वामनेन अन्तिमाध्यायत्रयं विरचितमासीत्। जयादित्यतः वामनस्य रचना प्रोढा इति प्रतीयते। अनयोः जयादित्यवामनयोः समयः ख्रीष्टीयः सप्तमशतकः इति विद्वांसः भणन्ति।

अस्याः काशिकावृत्तेः बहुविधवैशिष्ट्यानि परिदृश्यन्ते। तेषु कानिचन भवन्ति-अस्याः वृत्तेः पूर्ववृत्तिग्रन्थेषु अनुपलब्धस्य गणपाठस्यात्रेल्लेखः शुद्धरूपेण दृश्यते उपयुक्तसूत्रैः सह। अस्यां वृत्तौ विलुप्तवृत्तीनां ग्रन्थकाराणाञ्च क्वचित् सङ्केतः प्राप्यते। भाष्येऽनुपलब्धस्य व्याख्यानस्य प्राचीनवृत्तीनामाश्रयेण भाष्यकारेण सह विरोधोऽपि क्वचित् दृश्यते। अत्र ग्रन्थे उदाहरणानि प्रत्युदाहरणानि च प्रायशः प्राचीनवृत्तीनामनुसारेणैव विद्यन्ते, येन ऐतिहासिकतथ्यानां परिज्ञानं भवति। व्युत्पन्नरूपसिद्धिरस्याः वृत्तेः अपरं वैलक्षण्यम् पुनः सर्वप्रथमं काशिकावृत्तेः सूत्राणां सूक्ष्मरूपेण परिशीलनेन शैलीविषये इदं वक्तुं शक्यते यदयं ग्रन्थकारः प्रथमं सूत्रस्य सामान्यमर्थं प्रस्तौति। तदनुसारेण सम्भावितानि सर्वाणि उदाहरणानि निरूपयति। एतदनन्तरं सूत्रे विद्यमानानां प्रत्येकं पदानां किं तावत् प्रयोजनम् इति साधनार्थं प्रत्युदाहरणप्रदर्शनेन तदेव पक्षं स्पष्टरूपेण प्रतिपादयति। सूत्रस्थानां विशेषपदानामग्रे कुत्रानुवृत्तिर्भवतीत्यपि विषये स्पष्टरूपेण अत्र वृत्तौ निरूपयति। साम्प्रतं व्याकरणग्रन्थेषु अनुवृत्तिविषये अयमेव सर्वप्रथमः प्रतिपादकः ग्रन्थः इति न तिरोहितं

पण्डितानां सूत्रविशेषे ज्ञायमानायाः संज्ञायाः पारिभाषिकशब्दस्य वा कुत्रन्यत्र प्रयोगः? इत्यपि व्याख्यानप्रसङ्गे निरूपयति अत्र ग्रन्थे। अत्र ग्रन्थे सरलभाषायाः अनुपमशैल्याः च सुमधुरप्रयोगः दृश्यते। प्रायतः सूत्रव्याख्यानप्रसङ्गे भवतीति क्रियायाः प्रयोगः दृश्यते। सूत्रव्याख्यानसमये सूत्रस्य वास्तविकसरलार्थस्य प्रतिपादनं ग्रन्थकाराभ्यां भवति। पुनः भाष्यादौ उपलब्धानां वार्तिकानां ग्रहणं कुर्वतापि अनेन केवलमुपयोगि-वार्तिकानामेव संग्रहो व्यधायि। पुनः वार्तिकानामेकं सरलवाक्यस्वरूपमत्र ग्रन्थे उपयुक्तस्थाने प्रयच्छति। नव्यवैयाकरणैः शास्त्रार्थरसिकैः नैयायिकसरणिमनुसरद्भिः यो वाग्व्यापारो विहितः सोऽध्येतृणां केवलं क्लेशाय एव, न त्वपेक्षितशब्दशास्त्रज्ञानाय। अतएव साम्प्रतमष्टाध्यायीक्रममाश्रित्यैव काशिकादिवृत्त्यनुसारेणैव व्याकरणाध्ययनमधिकलाभप्रदमिति प्रामाणिकाः समालोचकाः उदात्तकण्ठेन स्वीकुर्वन्ति। एतादृशगम्भीरपर्यालोचनया इदं प्रतीयते यदि धैर्येण मनोयोगेन च काशिकावृत्तेः किञ्चित्कालपर्यन्तं स्वाध्यायोऽभ्यासश्च क्रियते, तदा पाणिनीयशब्दशास्त्रे नैपुण्यं भवेदित्यत्र न कश्चित्संन्देहः। इयं काशिकावृत्तिः गौरिव वर्तते व्याकरणरसिकानां कृते। पाणिनीयव्याकरणस्य विकाशे अनयोरविस्मरणीययोगदानं दृश्यते। पाणिनेः लघुप्रति-पादनशैलीं तथा पतञ्जलेः विस्तृतप्रतिपादनशैलीं त्यक्त्वा आभ्यां मध्यमा शैली अनुसृता वर्तते।

**( ग ) विमलमतिः**-अयं विमलमतिः महान् बौद्धवैयाकरणः आसीत्। मीमांसक-महोदयानुसारेण अस्य समयः भवति विक्रमसंवत्। अयं विमलमतिः तस्य समयस्य अत्यन्तं प्रौढो विद्वान् आसीत्। अयं विमलमतिरपि बौद्धसम्प्रदाये अत्यन्तप्रसिद्धरासीत्। अस्य ग्रन्थस्य नाम 'भागवृत्तिः' आसीत्। परन्तु अयं ग्रन्थः अधुना स्वरूपतः अनुपलब्धः परन्तु उद्धरणादिमाध्यमेन जीवितः दृश्यते। काशिकावृत्तेरनन्तरमस्य ग्रन्थस्य स्थानमासीदिति ज्ञायते। काशिका इव अयं ग्रन्थः अत्यन्तप्रामाणिकः आसीदिति पुरुषोत्तमदेवस्य भाषावृत्तेः अन्तिमश्लोकात् ज्ञायते। यथा-

**काशिकाभागवृत्त्योश्चेत् सिद्धान्तं बौद्धुमस्ति धीः।**
**तदा विचिन्त्यतां भ्रतर्भाषावृत्तिरियं मम।**

कस्मिंश्चित् काले अयं ग्रन्थः अत्यन्तं प्रसिद्धः आसीत्। अस्याः भागवृत्तेः उद्धरणानि ग्रन्थेषु उपलभ्यन्ते। भागवृत्तेः सर्वप्राचीनोद्धरणं कैयटकृते प्रदीपे प्राप्यते। अस्मात् अस्य ग्रन्थस्य महत्त्वं स्पष्टरूपेण ज्ञायते।

**( घ ) जिनेन्द्रबुद्धिः**-जिनेन्द्रबुद्धिः परमबौद्धः आसीत्। न्यासकारेण जिनेन्द्रबुद्ध्या स्वपरिचयविषये कुत्रापि किञ्चिन्मात्रमपि नोक्तम् श्रीशचन्द्रचक्रवर्त्ति-महोदयस्य मतानुसारेण अस्य समयः भवति खीष्टाब्दः। अस्य ग्रन्थस्य न्यासस्य पुष्पिकायां 'बोधिसत्त्वदेशीयः' इति उपाधि अस्य कृते विद्यते। अयं काशिकायाः उपरि 'न्यासः' इति टीकां रचितवान्। अस्याः टीकायाः अपरं नाम भवति 'काशिकाविवरणपञ्जिका' इति। इयं काशिकायाः

सर्वप्राचीना टीका। बौद्धधर्मत्वादेवायं न्यासकारः दीक्षितेन स्वग्रन्थे सर्वत्रोपेक्षितः। पाणिनीयसूत्राणां सम्यक् झटिति च तात्पर्यज्ञानाय अर्थाबोधनाय च काशिकावृत्ति अपरिहार्या। परन्तु छात्राणाम् उपयोगिनी न्यासनाम्नी बौद्धाचार्यविरचितेयं व्याख्या सर्वैः विद्वद्भिः स्वीक्रियते। अस्याः व्याख्याशैली पाण्डित्यपूर्णा, प्रौढा, ग्रन्थरहस्यावतारकावतरणशोभिता, उदाहरण-प्रत्युदाहरण-व्युत्पत्तिदर्शिका, यथावश्यकसूत्र-निर्देशसहिता, व्याकरणसकलरहस्य-स्फोटनयुक्ता, अधिगमितयाथातथ्या चेति हरतीयं शास्त्रवबोधतद्रहस्यजिज्ञासूनां मनांसि।

**( ङ ) वामनः**-अयमपि महान् बौद्धाचार्यः। संस्कृतशास्त्रकर्तारो चत्वारो वामनाः प्राप्यन्ते। ते भवन्ति विश्रान्तविद्याधाराऽऽख्यस्य जैनव्याकरणस्य कर्ता, काशिकावृत्तेः अन्तिमाध्यायत्रयस्य रचयिता, काव्यालङ्कारसूत्रवृत्तिकर्ता, लिङ्गानुशासनकर्ता चेति। एतेषु 'लिङ्गानुशासनम्' इति ग्रन्थस्य कर्ता वामनः वस्तुतः बौद्धः विद्यते। लिङ्गानुशासनस्य कर्तुः बौद्धस्य आचार्यस्य महावैयाकरणस्य वामनस्य कालः खिष्टीयनवमशतकस्य पूर्वार्ध इति पण्डितैः स्थिरीक्रियते। ग्रन्थेऽस्मिन् ऋग्वेद-महाभारत-महाभाष्य-हर्षचरित-शिशुपालवधादि-ग्रन्थेभ्यो उद्धरणान्यपि समुपलभ्यन्ते। लिङ्गानुशासनमिदं सरलं स्फुटं संक्षिप्तं च वर्तते।

**( च ) मैत्रेयरक्षितः**-अयं बौद्धो महावैयाकरणः मैत्रेयरक्षितः सम्भवतः बङ्गदेशीयः आसीत्। अस्य समयः भवति मीमांसकमतेन विक्रमसम्वत्। अयं बोधिसत्वदेशीय-जिनेन्द्रबुद्धिना विरचितायाः काशिकाविवरणपञ्जिकायाः नाम न्यासस्योपरि 'तन्त्रप्रदीप' इत्याख्यां सारगर्भितां महतीं व्याख्यां तथा धातुपाठोस्योपरि 'धातुप्रदीपः' इति लघुवृत्तिं लिखितवान्। अस्य तन्त्रप्रदीपस्य हस्तलेखः कोलकातानगरस्य राजकीयपुस्तकालये सुरक्षितोऽस्ति। तत्र प्रथमाध्यायस्य प्रथमपादान्तो भागो नोपलभ्यतेऽवशिष्टाश्च सकला भागा अविकला विद्यन्ते। मैत्रेयरक्षितो न केवलं पाणिनीयव्याकरणस्य असाधारणो विद्वान् आसीत्, अपितु अन्येषामपि व्याकरणानां प्राप्तप्रगाढपाण्डित्यमस्य पार्श्वे आसीत्। 'धातुप्रदीप'स्यान्ते रक्षितेन स्वयमुल्लिख्यते-

**वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम्।**
**नाम्ना तन्त्रप्रदीपं यो विवृतास्तेन धातवः।।**

**आकृष्य भाष्यजलधेरथ धातुनामपारायणक्षपणपाणिनिशास्त्रवेदी।**
**कालापचान्द्रमततत्त्वविभागदक्षो धातुप्रदीपमकरोज्जगते हिताय।।**

नेयं गर्वोक्तिः रक्षितस्य, अपितु तत्त्वकथनम् आसीदयं शास्त्रस्य गम्भीर-समालोचकः। अस्य कृते सीरदेवः स्वकीयपरिभाषावृत्तौ लिखति-

'तस्माद् बौद्धव्योऽयं रक्षितः, बौद्धव्याश्च विस्तरा एव रक्षितग्रन्था विद्यन्ते।'

न किमपि मतं तर्कनिकषकषणं विना तेन स्वकीयग्रन्थेषु कुत्रापि अङ्गीकृतम्।

परवर्तिनो वैयाकरणास्तन्मतं स्वमतपुष्टीकरणाय समुपस्थापयन्ति। तस्य उपरोक्तनिर्दिष्ट-ग्रन्थद्वयस्य महत्त्वं तट्टीकासम्पत्या सुखेनानुमातुं शक्यते अस्माभिः। परन्तु दुःखस्य अयमेव विषयः भवति-अस्य ग्रन्थयोः टीका न कैश्चित् बौद्धवैयाकरणैरेव कृता अस्ति, अपितु प्रायशः अन्यैरपि विद्वद्भिरनयोष्टिकां कृत्वा अस्य महावैयाकरणस्य महत्त्वं प्रतिपादितमस्ति।

**(छ) पुरुषोत्तमदेव**ः-अयं महान्बौद्धः वैयाकरणः आसीत्। स्वयं पुरुषोत्तमदेवः भाषावृत्तेः मङ्गलश्लोके बुद्धं नमस्कृत्य वदति-

**नमो बुद्धाय भाषायां यथा त्रिमुनिलक्षणम्।**
**पुरुषोत्तमदेवेन लघ्वी वृत्तिर्विधीयते।।**

अयं पुरुषोत्तमदेवः बङ्गवासी आसीदिति विद्वांसः विविधतर्कैरङ्गीकुर्वन्ति। अस्य पुरुषोत्तमदेवस्य कालः खिष्टाब्दद्वादशशतकस्योत्तरार्धः, ततः प्राग्वा भवेत् इति विद्वांसः तर्कयन्ति। अयं पुरुषोत्तमदेवः महामहोपाध्यायोपाधिविभूषितः आसीदिति तेन विरचितानां ग्रन्थानाम् उपक्रमोपसंहाराभ्यामवगम्यते। अयं बौद्धमहावैयाकरणः निम्नोक्तग्रन्थान् लिखितवान् इति ज्ञायते। तद्यथा-'भाषावृत्तिः अस्य 'लघुवृत्ति'रिति नामान्तरम्, 'महाभाष्यलघुवृत्तिः', 'कुण्डलीव्याख्यानम्', 'कारककारिका', 'दुर्घटवृत्तिः' (अधुना अप्राप्ता), 'परिभाषावृत्तिः', 'ज्ञापकसमुच्चयः', 'उणादिवृत्तिः', 'कारकचक्रम्'।

अस्य ग्रन्थेषु पाण्डित्यस्य प्रखरत्वं दृश्यते। अयं खलु तस्य समयस्य प्रमाणपुरुषः आसीत्। पाणिनीयव्याकरणस्य प्रौढत्वं पुरुषोत्तमदेवेन प्रतिष्ठापितम् तस्य अमूल्ययोगदानं सर्वे अङ्गीकुर्वन्ति।

**(ज) शरणदेव**ः-शरणदेवः बौद्धसंस्कृतवैयाकरणेषु अन्यतमः प्रौढवैयाकरणः भवति। अयमतीव व्युत्पन्नः। बङ्गप्रदेशे अस्य ग्रन्थस्य बहुलप्रचारत्वात् अयं बङ्गीयः इति पण्डितानां मतिः। अयं तमे खिष्टीयेऽब्दे स्वकीयां 'दुर्घटवृत्तिं' रचितवान्। व्याकरणे समागतानां दुर्घटस्थलानां आलोचनमत्र दुर्घटवृत्तौ विद्यते। दुर्घटपरम्परायां प्रथमतः मैत्रेयरक्षितकृतायाः दुर्घटवृत्तेः नाम आयाति, या वृत्तिः अधुना अनुपलब्धा। एतदनन्तरं पुरुषोत्तमदेवेन विरचितायाः दुर्घटवृत्तेः नाम आयाति या वृत्तिः अधुना अनुपलब्धा। तदनन्तरं शरणदेवकृतायाः दुर्घटवृत्तेः नाम आयाति तथा इयमधुना सम्पूर्णरूपेण प्राप्यते। शरणदेवकृता दुर्घटवृत्तिः सर्वरक्षितेन प्रतिसंस्कृता। विद्वांसः अभिलषन्ति सर्वरक्षितः सम्भवतः शरणदेवस्य गुरुरासीत्।

शरणदेवकृतदुर्घटवृत्तौ संख्यकपाणिनीयसूत्राणां तथा कतिपयवार्तिकानाम् आलोचनं क्रियते। अत्र ग्रन्थानां, ग्रन्थकाराणां तथा शब्दानां साधुत्वं प्रतिपादितमस्ति। 'कथम्' इति पदेन शङ्कायाः उपस्थापनं तथा 'उच्यते' इति पदेन शङ्कासमाधानं प्रायतः अत्र ग्रन्थे दृश्यते। व्याकरणपरम्परायामयं दुर्घटग्रन्थः एकप्रौढग्रन्थरूपेण ज्ञायते। अस्य ग्रन्थस्य

शैली नैव सरला।

**( झ ) धर्मकीर्तिः**-रूपावतारस्य कर्ता धर्मकीर्तिरासीत् परमो बौद्धो वैयाकरणः। अस्य समयः भवति विक्रमसंवत् इति मीमांसकाः वदन्ति। प्रक्रियापरम्परायाः प्रथमोपलब्दप्रयासः भवति 'रूपावतारः' इति। व्याकरणे प्रक्रियारूपनूतनपरम्परायाः जनकः भवति अयं बौद्धवैयाकरणः। रूपावतारे सर्वेषां पाणिनीयसूत्राणां सङ्कलनं नैव विद्यते। रूपावतारस्य नाम तत्रत्योदाहरणानि च दृश्यन्ते विविधेषु ग्रन्थेषु। एतेनास्य ग्रन्थस्य प्रामाण्यं प्रमाणितं भवति।

**( ञ ) कश्यपः**-अयं प्रसिद्धबौद्धभिक्षु आसीत्। मीमांसकस्य मतानुसारेण अस्य कालः आसीत् विक्रमसंवत्। अयं कश्यपभिक्षु इति नाम्ना अपि प्रसिद्धः आसीत्। अयं चान्द्रसूत्राणामुपरि 'बालबोधिनी' इति वृत्तिं लिखितवान्। इयं वृत्तिः लङ्कायामत्यन्तप्रसिद्धा अस्ति। अयं चान्द्रव्याकरणवत् 'बालावबोध'-व्याकरणं रचितवान्। व्याकरणमिदं लघुकौमुदी इव प्रतिभाति।

**उपसंहारः-**

संस्कृते प्राचीनकाले बहुविधव्याकरणानि आसन् इति रामायणात् ज्ञायते। अतीते व्याकरणपरम्परासीत्, साम्प्रतमस्ति तथा कालान्तरे स्थास्यति च। प्राचीनकाले व्याकरणस्य यादृशी परम्परा आसीत्, अधुना तत्र किञ्चित् परिवर्तनं परिलक्ष्यते। पुनः भविष्यकाले तत्र महद् परिवर्तनं भविष्यतीति नास्ति सन्देहावकाशः। कारणं सदैव भाषायाः परिवर्तनं भवति। जीवसत्तायाः अपि प्रतिक्षणं परिवर्तनं भवति। भाषा जीविता तदा भवति यदा तत्र परिवर्तनं, नूतनत्त्वं, रमणीयत्वं च तिष्ठति। भाषायां स्थिरता नाम मृत्युः। 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति व्यवहारेषु भाषा जीवति। अतः अपूर्णव्यवहारेषु अपूर्णोच्चारणाद् अपूर्णानुकरणाद् वा भाषा परिवर्तते।

क्षुद्रातिक्षुद्रं परिवर्तनं शतशः वर्षेषु महद्रूपं नयति। पश्यामः यदि व्याकरणस्य विकासपरम्परां तर्हि एवं दृश्यते यद् इयं परम्परा सप्तविंशतिप्रकारिका भवति। यथा- सूत्रपरम्परा, वृत्तिपरम्परा, वार्तिकपरम्परा, भाष्यपरम्परा, दर्शनपरम्परा, टीकापरम्परा, प्रक्रिया-परम्परा, दुर्घटपरम्परा, टिप्पणीपरम्परा, खण्डनमण्डनपरम्परा, सिद्धान्तपरम्परा, व्यवहारपरम्परा, अभिधानपरम्परा, अनुवादपरम्परा, पारायणपरम्परा, इतिहासपरम्परा, आधुनिकपरम्परा, यान्त्रिकपरम्परा, शास्त्रार्थपरम्परा, तुलनात्मकपरम्परा, विषयविवर्द्धनपरम्परा, धार्मिक-व्याकरणपरम्परा, सांस्कृतिकसामाजिकाद्यध्ययनपरम्परा, प्रतिपदपरम्परा, भाषाशास्त्रीयपरम्परा, अनुपदपरम्परा, पदशेषपरम्परा च।

बौद्धवैयाकरणानां योगदानम् एतादृशकतिपयपरम्परादिषु दृश्यते। सूत्रपरम्परायां चन्द्राचार्यस्य, वृत्तिपरम्परायां जयादित्यवामनयोः, दुर्घटपरम्परायां शरणदेवस्य, प्रक्रियापरम्परायां धर्मकीर्तेः, दर्शनपरम्परायां तथा सिद्धान्तपरम्परायां पुरुषोत्तमदेवस्य अविस्मरणीययोगदानं

विद्यते। बौद्धवैयाकरणानां साङ्गोपाङ्गालोचनसमये निम्नोक्तविचाराः मया अनुभूताः। अतः ते मदीयसिद्धान्तरूपेण इह उपस्थाप्यन्ते। ते यथा–

संस्कृतव्याकरणपरम्परायाः विवर्द्धने संख्यादृष्ट्या जैनाचार्याणां जैनवैयाकरणानां च यादृशप्राचुर्यं प्रभावः च परिलक्ष्यते, तादृशप्राचुर्यं प्रभावः च बौद्धानां न परिलक्ष्यते। परन्तु विविधवैयाकरणिकविषयानामेकत्र सङ्कलनेन पाणिनीयाष्टाध्याय्या परिपूर्णव्याकरणत्वं बौद्धवैयाकरणैरेव कृतमस्ति।

एतेषां बौद्धाचार्याणां कृतीनां पर्यालोचनेन व्याकरणपरम्परा परिपूर्णा भवति। येन प्रकारेण वृक्षस्य मूलारोहणं विना शाखारोहणम् असम्भवम् अस्वाभाविकं च प्रतीयते, तथैव बौद्धवैयाकरणचन्द्रप्रभृतीन् तथा तद्ग्रन्थाश्च तिरस्कृत्य नव्यव्याकरणग्रन्थानामध्ययनं पर्यालोचनादिकार्यं च नैव सम्भवेत्।

चन्द्राचार्यप्रभृतिभिः बौद्धवैयाकरणैः लिखितेषु ग्रन्थेषु त्रिमुनिस्वीकृतव्याकरणस्वभावस्य निर्वाहो यथा दृश्यते न तथा भट्टोजिप्रभृतिभिः विरचितेषु हिन्दुव्याकरणग्रन्थेषु। बौद्धवैयाकरणानां ग्रन्थेषु एव तादृशा नियमा पद्धतयश्च तथाविधा उपलभ्यन्ते, यैः त्रिमुन्यदृष्टा अनेके शब्दा निष्पादिताः जायन्ते।

संस्कृतव्याकरणस्याव्याप्त्यतिव्याप्तिदोषाणां निवारयितारो बौद्धाः वैयाकरणाः भवन्ति। अतः ते स्तुत्याः। संस्कृतव्याकरणविकासस्य बौद्धाः प्राणायिताः।

पाणिनिकात्यायानपतञ्जलीति प्रधानाचार्यत्रयादनन्तरं चन्द्रगोमिन एव नामात्र व्याकरणाकाशे देदीप्यमानं नक्षत्रमिव वर्तते। चान्द्रव्याकरणं संस्कृतव्याकरणेषु सरलतायां पूर्णतायां च अस्ति अद्वितीयम् लौकिकशब्दानुशासनं यथा चान्द्रं परिपूर्णं तथा नान्यत् कृतमस्ति। पुनः व्याकरणसूत्रेषु साम्प्रतं या या वृत्तयः समुपलभ्यन्ते, तत्र सर्वत्र चन्द्रगोमिनो वृत्तेरनुकरणं स्पष्टं प्रतीयते। इत्थं वृत्तिलेखनश्रेयः प्राथम्यमपि तमेवानुगच्छति इति सन्देहस्य विषयः।

अधुना व्याकरणशिक्षणार्थं काशिकापद्धतिः कौमुदीपद्धतिरिति पद्धतिद्वयमुपलभ्यते। सापि पद्धतिद्वयी बौद्धाचार्योद्भावितैव दृश्यते। काशिकाशैल्यां प्रथमं लक्षणं पश्चाच्च लक्ष्यं प्रस्तूयते, यत्र च लक्षणाल्लक्ष्याभिमुखप्रवृत्तिर्जायते, यां लक्षणैकचक्षुष्कपद्धतिरिति वदन्ति धीराः। इयं शैली तु बौद्धाचार्यजयादित्योद्भाविता मन्यते विद्वद्भिः। तेनैव प्रकारेण कौमुदीपद्धत्यां लक्ष्यं प्रधानं भवति। अत्र लक्ष्याल्लक्षणाभिमुखं गम्यते। सर्वप्रथमं तेनैव पद्धतिमिमामुद्भाव्य तयैव पद्धत्या स्वीयो रूपावतारो लिखितः बौद्धाचार्यैः।

सूत्रपरम्परायां चन्द्राचार्यस्य, वृत्तिपरम्परायां जयादित्यवामनयोः, दुर्घटपरम्परायां शरणदेवस्य, प्रक्रियापरम्परायां धर्मकीर्तेः, दर्शनपरम्परायां तथा सिद्धान्तपरम्परायां पुरुषोत्तमस्य, वरदराजः इव लघुप्रक्रियापरम्परायां बालावबोधव्याकरणकर्तुः कश्यपभिक्षोः अविस्मरणीयं

योगदानं विद्यते। वरदराजस्य 'लघुसिद्धान्तकौमुदी' इव कश्यपभिक्षोः 'बालावबोध'-व्याकरणं प्रतिभाति।

यदि बौद्धाः वैयाकरणाः न स्युः, तर्हि कदाचित् संस्कृतव्याकरणम् असम्पूर्णं स्यादिति मे मतिः।

**सन्दर्भाः**

काव्यादर्शः।

वाक्यपदीयम्, धा।

काव्यादर्शः, धा।

प्रदीपः, महाभाष्ये पस्पशाह्निकम् 'अथ शब्दानुशासनम् इत्यत्र।

(क) अनुशिष्यन्ते संस्क्रियन्ते व्युत्पाद्यन्तेऽनेन शब्दा इत्यनुशासनं शब्दानाम् अनुशासनं शब्दानुशासनम् (न्यास), काशिकायाम्, अथ शब्दानुशासनम् इत्यत्र।

(ख) अनुशिष्यन्ते विविच्य असाधुभ्यो विभज्य बोध्यन्ते येनेति करणे ल्युट्। (शब्दकौस्तुभः, महाभाष्यम्, पस्पशायाः प्रारभ्ये।

(ग) अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेति। (उद्योतः, नागेशः, अत्रैव)

**काशिकायाम् 'अथ शब्दानुशासनम्' इत्यस्य व्याख्यायाम्–**

(क) तत् शब्दानामिति कर्मणि षष्ठी। तदन्तेन समास न च 'कर्मणि च' इति सूत्रेण समासनिषेधः शङ्क्यः, तत्र 'च'शब्दस्य इति शब्दार्थतया 'कर्मणीतिशब्दवता उभयप्राप्तावितिसूत्रेण या षष्ठी तदन्तं न समस्यते इत्यर्थात्। इयं तु 'कर्तृकर्मणोरिति विहिता षष्ठी न तुभयप्राप्ताविति। आचार्यस्य कर्तृर्वस्तुतः सत्त्वेऽपीहाऽनुपादानात् 'चित्रं गवां दोहोऽगोपेने'त्यत्रहि आश्चर्यं प्रतिपाद्यं, तच्च यद्यशिक्षितो दोग्ध दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति नत्वन्यथा, अतः कर्तृकर्मणोर्विशेष्योपादानादस्त्युभयप्राप्तिः। अस्तु वा यथाकथञ्चिदुभयप्राप्तिस्तथापि न क्षतिः, उभयप्राप्ताविति सूत्रेऽविशेषेण विभाषेतिपक्षस्यापि वक्ष्यमाणतया नियमाऽप्रवृत्तिपक्षे 'आचार्यस्य शब्दानुशासन'मिति-प्रयोगसम्भवात्। शेषलक्षणा षष्ठी वाऽस्तु। (शब्दकौस्तुभः, अथशब्दानुशासनस्योपरि)

(ख) पुनः अस्मिन्सन्दर्भे न्यासः वदति-'अथेत्यादि। अथ शब्दोऽधिकारार्थः, अधिकार प्रस्ताव, शब्दानुशासनशास्त्रं प्रस्तूयत इत्यमुमर्थमथशब्दो द्योतयति। 'शब्दानुशासनम्' इत्येतावति ह्यभिहिते सन्देहः स्यात्-किं शब्दानुशासनमारभ्यते? पठ्यते? श्रूयते वा? इति, अथशब्दप्रयोगे त्वर्थान्तरव्यवच्छेदेन प्रस्तूयत इत्येषोऽर्थो निश्चीयते। अनुशिष्यन्ते

संस्क्रियन्ते व्युत्पाद्यन्तेऽनेन शब्दा इत्यनुशासनम् शब्दानामनुशासनं शब्दानुशासनम् अत्र केचिच्चोदयन्ति 'उभयप्राप्तौ कर्मणि' इत्यनेनात्र षष्ठी, ततश्च 'कर्मणि च' इत्यनेन समासप्रतिषेधेन भवितव्यम् इति, एतच्चायुक्तम्, यत्र ह्युभयोः प्राप्तिस्तत्रनेन कर्मणि षष्ठी विधीयते। क्व चोभयः प्राप्तिः? यत्र सामर्थ्यप्राप्तमुभयोः कर्तृकर्मणोरुपादानम्, यथा–आश्चर्यो गवां दोहोऽशिक्षितेनागोपालोकेनेति, एवं नाम दुर्दोहानां गवामशिक्षितेनागोपालकेन दोह इत्याश्चर्यभूतोऽत्र गवां दोहः प्रतिपादयितुमिष्टः स च यदि दुर्दोहानां गवामुपादानं क्रियते, अशिक्षितस्यागो-पालकस्य च कर्तुः, एवं शक्यः प्रतिपादयितुमाश्चर्यशब्दः, नान्यथेति सामर्थ्यप्राप्तमुभयोरुपादानम् शब्दानुशासनमित्यत्र तु शब्दानामिदमनुशासनम्, नार्थानाम्–इत्येतावतोऽर्थस्य विविक्षितत्वात्, तस्याचार्यस्य कर्तुरुपादानमन्तरेणापि प्रतिपादयितुं शक्यत्वादाचार्यापादानमकिञ्चित्करम् तस्मान्नात्रास्ति द्वयोरपि कर्तृकर्मणोः सामर्थ्यप्राप्तमुपादानं ततश्चोभयप्राप्तिरपि नास्त्येव। असत्याञ्च तस्यां न 'उभयप्राप्तौ कर्मणि' इत्यनेन षष्ठी, केन तर्हि? 'कर्तृकर्मणोः कृति' इत्यनेन। ततश्चेधमप्रव्रश्चनवत्समासो भविष्यति। अथ वा, शेषलक्षणैवेयं षष्ठीत्यचोद्यमेतत्। 'न्यासः, काशिकायाः प्रारम्भे'

सिद्धान्तकौमुदी, २५, पा.।

वाक्यपदीयम्

पस्पशाह्निकम् आगमप्रयोजने

वाक्यपदीयम्

शिशुपालवधम्

वाक्यपदीयम्

लघुशब्देन्दुशेखरः, सिद्धान्तकौमुदी, पा.

गोमिन् पूज्ये। चान्द्रसूत्रम्

ज्योत्स्नातमिस्राशृङ्गिणोर्जस्वलगोमिनमलिनमलीमसाः। पा.सू.

संस्कृत-व्याकरणशास्त्र का इतिहास, प्रथमो भागः, पृ.

संस्कृत-व्याकरणशास्त्र का इतिहास, प्रथमो भागः, पृ.

संस्कृत-व्याकरणशास्त्र का इतिहास, प्रथमो भागः, पृ.

संस्कृत-व्याकरणशास्त्र का इतिहास, प्रथमो भागः, पृ.

पस्पशाह्निकम् शशिभूषणमिश्रः, वि.,न्. पाब्लिकेशान्, कोलकाता, उपक्रमः, पृष्ठसंख्या–

**सहायकग्रन्थाः –**

१. काशिकावृत्तिः–न्यासपदमञ्जरीव्याख्योपेता, भागः, सम्पादकौ, स्वामी द्वारिकादास–शास्त्री तथा आचार्यकालिकाप्रसादशुक्लः, सुधिप्रकाशनम्, द्वितीयसंस्करणम् क्रमेण।

२. चान्द्रव्याकरणवृत्तेः समालोचनात्मकमध्ययनम्–डा. हर्षनाथमिश्रः, एल्प्विएपिएएस्एए नवदेहली।

३. संस्कृत व्याकरणशास्त्र का इतिहास, भाग–ब्रह्मदत्तजी जिज्ञासु, रामलाल कपुर ट्रस्ट, सोनिपत्, हरियाणा, संवत्।

४. संस्कृतव्याकरणशास्त्रेतिहासविमर्शः – डा. अशोकगौडशास्त्री, भारतीयविद्यासंस्थानम् वाराणसी, प्रथमसंस्करणम्, विक्रमसंवत्।

५. व्याकरण दर्शनेर इतिहास–गुरुपदहालदारः, संस्कृतवुक्डिपो, कोलकाता, पुनमुद्रणम्, जानुयारी।

६. शब्दशास्त्रेर इतिहास–कालीजीवनदेवशर्मा, रामकृष्णमिशन–इनस्टिटिउट्–आफ् कालचर्चा, गोलपार्क्, कोलकाता, प्रथमप्रकाशनम्।

7. A Dictionary of Sanskrit Grammar - K.V. Abhyankar, Oriental Institute of Baroda, Baroda, 1961.

8. Technical Terms and Technique of Sanskrit Grammar - K.C.Chatterji, Sanskrit Book Depot., Kolkata.

एम.ए., पीएच.डी., डी.लिट्<br>
राष्ट्रपतिपुरस्कृतः<br>
वरिष्ठसहायकाचार्यः, श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालयः<br>
ए, पि. डब्ल्यु. डि. रोड, कोलकाता



# 22

## बौद्धवैयाकरणः पुरुषोत्तमदेवः

- नीतेशद्विवेदी

व्याङ्पूर्वात्करोतेर्ल्युटि कृते सति व्याकरणशब्दोऽयं निष्पद्यते। व्याक्रियन्ते विविच्यन्तेऽसाधुशब्देभ्यः साधुशब्दाः अनेन तद् व्याकरणम्। व्याकरणमधीते तद् वेत्ति वा वैयाकरणः। भाषासु संस्कृतभाषा श्रेष्ठा, सरला, सुबोधा वैज्ञानिकी च। तस्य हेतुः संस्कृतव्याकरणमेव। अतः देववाणी-पदम् अलङ्करोतीयं भाषा। संस्कृतव्याकरणस्य विषये सम्प्रति पाणिनिव्याकरणस्यैव पठन-पाठनं प्रधानतया सर्वत्र समुपलभ्यते। व्याकरणमिदम् सर्वाण्यपि व्याकरणान्यतिशेते। पाणिनिव्याकरणमाश्रित्य बहूनि व्याकरणानि रचितानि। तद्यथा-

| क्रमः | आचार्याः | व्याकरणानि | समयः |
|---|---|---|---|
| १ | अनिणह्लतः | कातन्त्रव्याकरणम् | २००० विक्रमपू. |
| २ | चन्द्रगोमी | चान्द्रव्याकरणम् | १००० विक्रमपू. |
| ३ | क्षपणकः | क्षपणकव्याकरणम् | विक्रमप्रथमशताव्याम् |
| ४ | देवनन्दी | जैनेन्द्रव्याकरणम् | संवत् ५०० तमः |
| ५ | वामनः | विश्रान्तविद्याधरव्याकरणम् | संवत् ४००-६०० |
| ६ | अकलङ्कः | अकलङ्कव्याकरणम् | संवत् ७००-८०० |
| ७ | पाल्यकीर्तिः | जैनशाकटायनव्याकरणम् | संवत् ८७१-९२४ |
| ८ | शिवस्वामी | | ९१४-९४० |
| ९ | भोजदेवः | सरस्वतीकण्ठाभरणम् | १०७५-१११० |
| १० | बुद्धिसागरः | बुद्धिसागरव्याकरणम् | १०८० |
| ११ | हेमचन्द्रः | हैमव्याकरणम् | ११४५-१२२० |
| १२ | भद्रेश्वरसूरिः | दीपकव्याकरणम् | १२०० |
| १३ | अनुभूतिस्वरूपः | सारस्वतव्याकरणम् | १३०० |
| १४ | बोपदेवः | मुग्धबोधव्याकरणम् | १३००-१३५० |
| १५ | क्रमदीश्वरः | जौमरव्याकरणम् | विक्रम१३ तमे शताब्दे |
| १६ | पद्मनाभः | सुपद्मव्याकरणम् | विक्रम१४शताब्दे |

पाणिनिव्याकरणप्रचारे नैके व्याकरणवेत्तारः योगदानम् दत्तवन्तः। तेषु वैयाकरणेष्वन्यतमो महावैयाकरणो भवति आचार्यः पुरुषोत्तमदेवः।

**पुरुषोत्तमदेवस्य परिचयः–**

'संस्कृत-व्याकरण का इतिहास' इत्यस्मिन् इतिहासग्रन्थे श्रीयुधिष्ठरमीमांसकमहोदयेन प्रोक्तं यत् महावैयाकरणोऽयम् वङ्गीयः आसीदिति। एषः पुरुषोत्तमदेववर्यः बङ्गवैयाकरणेषु अत्यन्तं प्रामाणिकः अस्तीति नास्ति विदुषां विवादः।

**पुरुषोत्तमदेवस्य कालः–**

यथाऽन्येषाम् विदुषाम् कालविषये प्रायः तर्क एवाद्रियते, तथा अमीषां कालविषयेऽपि अनुमानप्रमाणमेवाश्रीयते। भाषावृत्तिग्रन्थस्य व्याख्याऽत्र सृष्टिधराचार्येण प्रोक्तं यद् राज्ञः लक्ष्मणसेनस्य निवेदनं स्वीकृत्यानेन भाषावृत्तिः ग्रन्थः प्रणीतः। तस्य राज्ञः शासनकालः विक्रमसंवत् द्वादशशताब्दीमध्ये स्वीकुर्वन्तीतिहासविदः। प्रमाणान्तरेणापि समायात्ययमेव कालः। तथा हि भाषावृत्तिग्रन्थस्य विवृत्तिटीकायाम्–वैदिकप्रयोगानर्थिनो लक्ष्मणसेनस्य राज्ञ आज्ञया प्रकृते कर्मणि प्रसजन् इति।

शरणदेवमहोदयः शकाब्दे तदनुसारम् विक्रमसंवत् १२३० मध्ये दुर्घटवृत्तिं प्रणीतवान्। तस्याम् वृत्तौ नैकेषु प्रसङ्गेषु भाषावृत्तिग्रन्थस्य तद्ग्रन्थकारस्य चोल्लेखो वर्तते। अतः तत्प्रागेव वैयाकरणस्यास्य कालः इति निश्चीयते।

पुरुषोत्तमदेवः श्रद्धेयः विद्वान् आसीत्, यतः नैके विद्वांसः स्वीयेषु ग्रन्थेषु भाषावृत्तिग्रन्थं निर्दिष्टवन्तः।

**पुरुषोत्तमदेवस्य धर्मः–**

महावैयाकरणोऽयम् बौद्धमतानुयायी आसीदिति मङ्गलश्लोकेन ज्ञायते। तथा हि–

**नमो बुधाय बुद्धाय यथा त्रिमुनिलक्षणम्।**
**पुरुषोत्तमदेवेन भाषावृत्तिर्विधीयते।।**
**विधीयते प्राणपणा भाषायां लघुवृत्तिका।।**

पुरुषोत्तमदेवकृत-भाष्यवृत्तिग्रन्थस्य व्याख्याता शङ्करः वदति–अथ भाष्यवृत्ति-व्याचिख्यासुर्देवो विघ्नविनाशाय सदाचारपरिप्राप्तमिष्टदेवतानतिस्वरूपं मङ्गलमाचचार।

पुरुषोत्तमदेवविरचितभाष्यवृत्तिग्रन्थे मध्ये-मध्ये बौद्धधर्मस्य प्रशंसा दृश्यते। यथा–सुप्प्रतिना मात्रार्थे इत्यस्मिन् सूत्रे–न दोषप्रति बौद्धदर्शने। महाबोधि गन्तास्म। प्रणम्य शास्त्रे सुगताय तायिने। इत्थमयं बौद्धमतानुयायी आसीदित्यत्र सन्देहलेशोऽपि नास्ति।

**पुरुषोत्तमदेवस्य कृतयः–**

कुण्डलीव्याख्यान, कारककारिका, भाषावृत्तिः, दुर्घटवृत्तिः, परिभाषावृत्तिः, ज्ञापकसमुच्चयः, उणादिवृत्तिः कारकचक्रश्चेत्येताः कृतयः तस्य प्रसिद्ध्यन्ति।

**परिभाषावृत्तिः–**

पाणिनिव्याकरणे परिभाषाणां महत्त्वं सूत्रवदेव वर्तते। परिभाषारूपेण प्रायः द्विविधः परिभाषाः दृश्यन्ते। सूत्ररूपाः परिभाषाः, अन्याः परिभाषाः। सूत्ररूपा परिभाषा अर्थात् परिभाषासूत्रन्तु पाणिनिनिर्मितं वर्तते। तेषां समुल्लेखस्तु अष्टाध्याय्यां वर्तते, किन्तु सूत्रभिन्नानां परिभाषावचनानां व्याख्यानमेकत्र न दृश्यते। अतः महता श्रमेण परिभाषावृत्तिरिति ग्रन्थः एभिर्विद्वद्वरेण्यैर्विरचितः। सः कालान्तरे लघुपरिभाषावृत्तिनाम्ना प्रथितः। अमुम् ग्रन्थमाश्रित्य सीरदेवेन बृहत्परिभाषावृत्तिः लिखिता।

नीलकण्ठदीक्षितविरचितपरिभाषावृत्तिग्रन्थोपर्यपि पुरुषोत्तमदेवकृतेः प्रभावो दृश्यते। अतः एवं वक्तुं शक्यते यत् परिभाषाविषयकेषु ग्रन्थेषु पुरुषोत्तमदेवविरचिता लघुपरिभाषावृत्तिः पाणिनीयव्याकरणे उपजीव्यग्रन्थरूपेण प्रसिद्धा वर्तते। अतोऽस्य ग्रन्थस्य प्रभावः परिभाषा-विषयकप्रायः सर्वेषु ग्रन्थेषु वर्तते।

**परिभाषावृत्तिः–**

अस्मिन् ग्रन्थे १२० परिभाषास्सन्ति। आदिमा परिभाषा–अर्थवद्ग्रहणे नानर्थकस्य। ग्रन्थेऽस्मिन् अन्तिमा परिभाषा-भवति व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् इति। एभिर्विद्वद्वर्यैः ललिताख्या परिभाषावृत्तिः विरचिता, यत्र प्रायशः भाष्यकारस्येव वृत्तिकारस्य तट्टीकाकाराणां न्यासकारादीनाञ्च मतानि प्रमाणरूपेण सादरं समुल्लिख्यन्ते। व्याडिकृतस्य परिभाषासूचनग्रन्थस्यानन्तरम् अस्यैव ग्रन्थस्य प्रसिद्धिः वर्तते।

**शैली**-

पुरुषोत्तमदेववर्यस्य शैली अत्यन्तं सारगर्भिता तथ्यपूर्णा च वर्तते। अत्यन्तं सङ्क्षेपेण यावदावश्यकं नूतनञ्च तावदेव तत्र–तत्र लिखितम् वर्तते। परिभाषावृत्ति-लेखनेन विद्वद्वर्येण पुरुषोत्तमदेवेन परिभाषाणामध्ययने महद्योगदानं कृतमस्ति।

**परिभाषेन्दुशेखरे पुरुषोत्तमदेवस्य प्रभावः–**

पाणिनीयव्याकरणे व्याख्यानपरम्परासु यथा भट्टोजिदीक्षितः नव्यमार्गप्रवर्तकः, तथैव विद्वद्धौरेयाः नागेशभट्टाः तस्यामेव परम्परायाम् नूतनमार्गसंस्थापको वर्तते। नव्यवैयाकरणानां परिभाषाविषयकसिद्धान्तानां समीक्षार्थं नागेशभट्टैः स्वसिद्धान्तानुसारेण परिभाषेन्दुशेखराख्यो ग्रन्थो विरचितः। ग्रन्थेऽस्मिन् आचार्यपुरुषोत्तमदेवकृतपरिभाषापाठ एव समादृतः। तत्र हि–व्याख्यानतो परिभाषातः क्रमः समान एव। परिभाषेन्दुशेखरे ऊनचत्वारिंशत् परिभाषाणाम् पाठोऽधिको वर्तते। पञ्चनवतिः (९५) परिभाषास्तु परिभाषापाठरीत्यैव स्वीकृतास्सन्ति।

पुरुषोत्तमदेवकृतपरिभाषापाठापेक्षया एताः निम्नलिखिताः परिभाषाः अधिकास्सन्ति।

१. शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यम्।

२. लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः।
३. क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता।
४. यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्।
५. यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्।
६. स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति।
७. पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न।
८. प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते।
९. उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति।
१०. अपवादो ह्यन्यत्रचरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते।
११. अभ्यासविकारेषु बाध्यबाधकभावो नास्ति।
१२. विभक्तौ लिङ्गविशिष्टाग्रहणम्।
१३. सूत्रे लिङ्गवचनमतन्त्रम्
१४. नञ्वि युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः।
१५. हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्।
१६. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम्।
१७. ताच्छीलिके णेऽण्कृतानि भवन्ति।
१८. धातोः कार्यमुच्यमानं तत्प्रत्यये भवति।
१९. प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्।
२०. नञ्घटितमनित्यम्।
२१. आतिदेशिकमनित्यम्।
२२. विधौ परिभाषोपतिष्ठते नानुवादे।
२३. प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः।
२४. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी।
२५. व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते।
२६. प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम्।
२७. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्।
२८. श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्।
२९. प्रत्येकं वाक्यपरिसमाप्तिः।
३०. क्वचित्समुदायेऽपि।
३१. अभेदकाः गुणाः।
३२. बाधकान्येव निपातनानि।
३३. निषेधांश्च बलीयांसः।
३४. योगविभागादिष्टसिद्धिः।

३५. पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते।

३६. एकस्या आकृतेश्चरितः प्रयोगः द्वितीयस्यास्तृतीयस्याश्च नभविष्यति।

३७. सम्प्रसारणं तदाश्रयं च कार्यं बलवत्।

३८. औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम्।

३९. पदगौरवाद्योगविभागो गरीयान्।

**निष्कर्षः–**

इत्थम् वक्तुम् शक्यते यत् महावैयाकरणस्य पुरुषोत्तमदेवस्य योगदानम् पाणिनीय-व्याकरणे अप्रतिमं वर्तते इति दिक्।

व्याकरण-विभाग
रा.सं.सं., श्रीरघुनाथ-कीर्ति-परिसर,
देवप्रयाग (उत्तराखण्ड)

